मद इति । एतेऽनृतादिहिंसांता ये दमदोषत्वे स्थिताः स्मृताः, त एते विपर्ययाः स्मृताः सत्यादिरू त्वेन स्मृताः मददोषा मदनाशकरा उदाहृताः । एते सत्यापैशुनातृष्णाप्रातिकूल्यातमोऽरतिलोकाद्वेषाभिमानाविवादाप्राणिहिंसाऽपरिवादानतिवादापरितापक्ष माधृतिसिद्ध्यापकृत्याहिंसा इत्येते मदनाशकरा दाहृताः ॥ २४ ॥

'त्यागो भवति षड्विधः' इत्युक्तं तत्राह—

श्रेयांस्तु षड्विधस्त्यागस्तृतीयः खलु दुष्करः ॥
तेन दुःखं तरत्येव भिन्नं तस्मिन् जितं कृते ॥ २५

श्रेयानिति । षड्विधेषु त्यागेषु तृतीयस्त्यागो दुष्करः दुःखसंपाद्यः । तृतीयेन तेन त्यागेन दुःख

---

मद इति । येषां विपर्यया दमगुणत्वेन उक्तास्त एव सत्याः ऽष्टादश तथा वक्ष्यमाणस्य षड्विधत्यागस्य च विपर्ययाः षट् च लक्ष्मीप्राप्तौ हर्षः १ अप्रिये जाते व्यथा २ स्त्रीयेषु याच्ञा पात्रेष्वप्रदानम् ४ सत्यधिकारे इष्टापूर्तयोरकरणम् कामस्यात्यागः प्रमादश्च ६ एते चतुर्विंशतिर्मददोषाः ॥ २४ ॥

श्रेयान् प्रशस्ततरः तृतीयो वक्ष्यमाणः कामत्यागस्तत्र कामत्यागे कृते सति भिन्नं भेदः, भावे निष्ठा, द्वैतमिति यावत्, स एव दुःखं "द्वितीयाद्वै भयं भवति, यत्रान्यत्पश्यत्यन्यच्छृणो तदल्पम् अथ यदल्पं तद्दुःखम्" इत्यादिश्रुतिभ्यः । कामत्या

आध्यात्मिकादिभेदभिन्नं तरत्येव तस्मिन् त्यागे कृते सर्वं जितं भवत्येव ॥ २५ ॥

त्यागषट्कं दर्शयति—अर्हत इति सार्द्धेन—

अर्हते याचमानाय पुत्रान्वित्तं ददाति यत् ॥
इष्टापूर्तं द्वितीयं स्यान्नित्यं वैराग्ययोगतः ॥ २६ ॥
कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः ॥
अप्रमादी भवेदेतैः स चाप्यत्र गुणो महान् ॥२७॥

अर्हते दानयोग्याय याचमानाय पुत्रान्वित्तं ददाति यत् तदेव त्यागद्वयं षण्णां मध्ये प्रथमम् । इष्टापूर्त्तं द्वितीयं स्यात्—इष्टं श्रौते कर्मणि यद्दानम् । पूर्त्तं स्मार्त्ते कर्मणि । इष्टं देवेभ्यो दत्तम्, पूर्तं पितृभ्य इति केचित् । नित्यं वैराग्ययोगतः विशुद्धसत्त्वस्यानित्यत्वादिदोषदर्शिनो विरक्ततया धनादिपरित्यागः कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः ।

किमेभिर्भवतीत्याह—अप्रमादीति । य एतैः षड्भि-

---

देव सर्वदुःखनिवृत्तिरूपो मोक्षः सिद्धः । तथा च श्रुतिः—
"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्यो ऽमृतोभवत्यत्र ब्रह्म समश्नुते" इति ॥ २५ ॥

त्यागमेवाह अर्हते इति । अर्हते योग्याय । इष्टं यागहोमादि १ आपूर्तं तडागारामादि २ ॥ २६ ॥

स्त्यागैः समन्वितः सोऽप्रमादी भवेत् । स अप्रमादोऽ
गुणः अष्टभिर्गुणैः समन्वितो भवति २६ ॥ ॥ २७।
के ते ? तान् दर्शयति—

सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च ॥
अस्तेयं ब्रह्मचर्यं च तथाऽसंग्रहमेव च ॥ २८ ॥

सत्यमिति । सत्यं यथार्थभाषणं १ ध्यानं चेत
कस्मिंश्चित् शुभाश्रये मंडलपुरुषादौ तैलधारावत्संतता
च्छेदिनी प्रवृत्तिः २ समाधानं प्रणवेन विश्वाद्युपसंह
कृत्वा स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनाऽवस्थ
नम् ३ चोद्यं कोऽहं कस्य कुतो इत्यादि वा ४ वैरा
दृष्टानुश्रविकविषयवितृष्णता ५ अस्तेयम् अचौर्यं अ
त्मनो द्रव्यस्य वा । आत्मचौर्यमुक्तम् ॥

योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ॥
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ इति ।
ब्रह्मचर्यम् अष्टाङ्गमैथुनत्यागः । तथाचोक्तम्—
दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥

---

षड्विधत्यागफलमाह अप्रमादीति । स च अप्रमादश्च ॥
सत्यं यथार्थवचनम् १ ध्यानं मूर्तेरीश्वरस्य आत्मनो
ऽनुसंधानम् २ समाधानं संप्रज्ञातासंप्रज्ञातभेदेन द्विविधः समा

एतन्मैथुनमष्टाङ्गं प्रवदंति मनीषिणः ।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥ इति

असङ्ग्रहः अपरिग्रहः पुत्रदारगृहादीनाम् ८ एतत्परिपालयेत् ॥ २८ ॥

दोषान्वर्जयेदित्याह—

एवं दोषा दमस्योक्तास्तान् दोषान्परिवर्जयेत् ॥
दोषत्यागोऽप्रमादः स्यात्स चाप्यष्टगुणो मतः ॥२९॥

एवमिति । 'दमोऽष्टादशदोषः स्यात्' इति ये दोषा उक्तास्तान्वर्जयेदिति । कस्मादित्यत्राह—दोषत्यागे ऽप्रमादःस्यात् तेषु दोषेषु त्यक्तेषु प्रमादी न स्यादित्यर्थः । सोऽप्यप्रमादोऽष्टगुणो मतः । 'सत्यं ध्यानम्' इत्यादिना पूर्वमेवोपादिष्टामित्यर्थः ॥ २९ ॥

इदानीं सत्यस्तुतिः क्रियते—

सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः ॥
तांस्तु सत्यमुखानाहुः सत्ये ह्यमृतमाहितम् ॥३०॥

सत्येति ॥ सत्यात्मा सत्यस्वरूपो भव हे राजेन्द्र,

---

३ चोद्यं तर्कः येन समाधिफले सार्वकाम्यादौ दोषमुद्भावयंति ४ वैराग्यम् उपरमः ५ अस्तेयं परस्वापहरणाभावः ६ ब्रह्मचर्यं स्त्रीसंगराहित्यम् ७ असंग्रहो निष्परिग्रहता ८ ॥ २९ ॥

उक्तमनुवदन्नप्रमादप्रतियोगिनं प्रमादं वक्तुम्—एवमिति॥२९॥

सत्ये लोकाः प्रतिष्ठिताः तांस्तु सत्यमुखान् सत्यप्रधा-
नान् सत्याधीनात्मलाभान् आहुः । सत्ये हि अमृत
आहितम्, अमृतं मोक्षः ॥ ३० ॥

निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत् ॥
एतद्धात्रा कृतं वृत्तं सत्यमेव सतां व्रतम् ॥ ३१

निवृत्तेनेति । निवृत्तेनैव दोषेण 'क्रोधादय'( अ० १ श्लो० १५ ) इत्यादिना पूर्वोक्तदोषरहितं तपोव्रतमिहाचरेत् । एतद्धात्रा परमेश्वरेण कृतं वृत्तं सत्यमेव सतां परं व्रतम् ॥ ३१ ॥

इदानीं 'कथं समृद्धम्' इत्यादिनोपक्रान्तं प्रकरणार्थमुपसंहरति—

दोषैरेतैर्विमुक्तं तु गुणैरेतैः समन्वितम् ॥
एतत्समृद्धमप्यृद्धं तपो भवति केवलम् ॥ ३२ ॥

दोषैरिति । दोषैरेतैः 'क्रोधादयः' इत्यादिना पूर्वोक्तैर्विमुक्तं गुणैरेतैः ज्ञानादिभिः समन्वितं यत् एतत्समृद्धमप्यृद्धं तपो भवति केवलम् ॥ ३२ ॥

---

दमत्यागाप्रमादानुक्त्वा तेषां सत्यमुखत्वं प्रागुक्तं विवृणोति सत्यात्मेति। सत्ये आत्मा चित्तं यस्य स तथा तान् दमत्यागाप्रमादान् ॥

दोषानिवृत्त्यैव तपःसिद्धिर्धात्रा कृतेत्याह—निवृत्तेनैवेति ॥ ३१

किंबहुना—

यन्मां पृच्छसि राजेन्द्र संक्षेपात्प्रब्रवीमि ते ॥
एतत्पापहरं शुद्धं जन्ममृत्युजरापहम् ॥ ३३ ॥

यन्मामिति । हे राजेन्द्र, यन्मां पृच्छसि तत्संक्षेपात् समासतो ब्रवीमि ते, एतत्पापहरं शुद्धं फलाभिकाङ्क्षा-राहितं तपोव्रतं जन्ममृत्युजरापहम् ॥ ३३ ॥

किं तदिति चेत् तत्राह—

इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ॥
अतीतानागतेभ्यश्च मुक्तश्चेत्स सुखी भवेत् ॥३४॥

इंद्रियेभ्य इति । हे भारत यो विषयेभ्यः पंचभ्यः इन्द्रियेभ्यो वर्तमानेभ्यो मनसश्चैव तथाऽतीतेभ्योऽनागतेभ्यश्च मुक्तश्चेत्स सुखी भवेत् मुक्त एव भवतीत्यर्थः ॥३४॥

एवमुक्ते प्राह धृतराष्ट्रः—

धृतराष्ट्र उवाच—

आख्यानपंचमैर्वेदैर्भूयिष्ठं कत्थ्यते जनः ॥
तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथाऽपरे ॥ ३५ ॥

---

प्रश्नव्याख्यानमुपसंहरति दोषैरिति ॥ ३२ ॥ ३३ ॥

पञ्चभ्य इन्द्रियेभ्यः षष्ठान्मनसश्च स्वस्वविषये रागद्वेषोत्थाः षट् प्रमादाः, अतीते नष्टे पुत्रशोकादिजः सप्तमः अनागते पुत्रकामस्य तदभावे यः क्लेशः सोऽष्टमः प्रमादः । एतेभ्यः प्रमादेभ्यो मुक्तश्चेत् स सुखी भवेत् ॥ ३४ ॥

आख्यानेति । आख्यानं पुराणं पंचमं येषां वेदाना ते आख्यानपंचमाः । श्रूयते च छन्दोग्ये—"इतिहासपुराणं च पञ्चमो" इति । तैराख्यानपंचमैर्वेदैः भूयिष्टम् अत्यर्थं कत्थ्यते श्लाघ्यते बहु मन्यते । सर्वस्मादधिकोऽहमिति कथ्यते इति केचित्पठन्ति । आख्यानपंचमैर्वेदैः कश्चिज्जनः पञ्चमवेदीतिकथ्यते इत्यर्थः । तथा चान्ये चतुर्वेदास्त्रिवेदाः ॥ ३५ ॥

---

एवं विद्यासाधनान्यधिगम्य अध्ययनगृहीताद्वेदादधिगतं ध्यानामनेकत्वं मन्वानः किं तद्ध्येयं श्रेष्ठमिति पृच्छति—आख्यानेति । आख्यानम् इतिहासपुराणादि पञ्चमं येषु तैर्वेदैः "सर्वं खल्विदं ब्रह्म" "ब्रह्मैवेदं विश्वं" "पुरुष एवेदं सर्वम्" इत्यादिभिर्भूयिष्ठं नामादिप्रपञ्चादधिकतमं भूमाख्यं परं ब्रह्म तदेव जगत्स्थावरजंगमरूपं जगदिति कथ्यते । अन्ये शाखिनः पुनश्चतुर्वेदाः चत्वारि वेदयन्ति ते तथा चत्वारः पुरुषा इति । बाह्यः शारीरः पुरुषः, छन्दः पुरुषो, वेदपुरुषो, महापुरुषः इति । छन्दोगायत्र्यादिनियताक्षरपादं तच्च यजुःसाम्नोरप्युपलक्षणम्, वेदः कर्मचोदनात्मकं ब्राह्मणम् । तथा त्रिवेदाः त्रीन् क्षरमक्षरमुत्तमं चेति पुरुषं वेदयन्ते ते त्रिवेदाः, क्षरं प्रधानम् "अमृताक्षरं हरः क्षरात्मानावीशते देव एकः" इति । अमृतो जीवः कूटस्थः सोऽक्षरं सुलोप आर्षः ईशाते ईष्टे ।

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः इति ॥ ३५ ॥

द्विवेदाश्चैकवेदाश्च अनृचश्च तथाऽपरे ॥
एतेषु मेऽधिकं ब्रूहि यमहं वेद ब्राह्मणम् ॥ २६ ॥

अपरे द्विवेदाः एकवेदाश्च, अनृचश्च तथाऽपरे। एतेषु

---

तथा द्विवेदः–"द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्" इति वाच्यवाचकयोरभेदेन शब्दब्रह्मशब्देनात्र कृत्स्नो नामरूपात्मकः प्रपञ्च उच्यते, परं च तदतीतम् इति द्वयमपि वेद्यत्वेन वदंति। एकवेदाः–"एकधैवानुद्रष्टव्यं नेह नानास्ति किंचन" इत्यादयः एकमेव वेद्यं वेदयंति। अनृचश्च–ऋच्यते स्तूयते इति ऋक् ईश्वरः स पृथक्त्वेन नास्ति येषां तेऽनृचः ब्रह्माद्वैतवादिनः। एकवेदानां व्युत्थानकाले द्वैतमस्ति समाधौ तु बाधितं तद्भवति। अनृचां तु अवस्थाद्वयेऽपि द्वैताभावस्तुल्य इति भेदः। एतेषां षण्णां मध्ये अधिकं ब्रूहि यमहं वेद जानीयां ब्राह्मणं ब्रह्मविदमित्यर्थः। अत्र 'भूयिष्ठं जनः' इति प्रथमः सविशेषाद्वैतपक्षः। द्वितीयो निरीश्वरपक्षः, सांख्यानां मीमांसकानां च। त्रिवेदास्तु पातञ्जला जीवेशजगतां भेदं वदन्तः। द्विवेदास्त्वौडुलोमाः कार्यात्मना भेदं कारणात्मना अभेदं च सत्यमेव वदन्तः। तथा कटकमुकुटाद्यात्मना भेदोऽपि सत्यः कानकात्मनाऽभेदोऽपि सत्य एवेति। एकवेदानामपि किंचिद्बाधयोग्यं सत्त्वासत्त्वाभ्यामनिर्वचनीयं द्वैतमस्त्येव व्यावहारिकं प्रातिभासिकात्सद्योबाध्यात् रज्जूरगादेर्विलक्षणं यावन्मोक्षमबाध्यम्। अनृचां तु दृष्टिसृष्टिवादिनां–यथा रज्ज्वामुरगः स्रक् च कल्पिताः एवमात्मनि जाग्रत्स्वप्नौ समसत्ताकौ इति भेदः। तत्र "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति न्यायेन आद्यं पक्षचतुष्टयं व्यवहारस्य पारमार्थिकत्वाद्रमध्यारोपदृष्ट्योपन्य-

मनुष्येषु अधिकं श्रेष्ठं ब्रूहि यमहं ब्राह्मणं वे

स्तम्। अन्त्यः पक्षोऽपवाददृष्ट्या व्यवहारापलापेन, एकवेदपक्ष
व्यामिश्रदृष्ट्याऽनिर्वचनीयाख्यया, एवमेव दृष्टित्रयमाश्रित्य
स्त्रमपि प्रवृत्तम् "आत्मकृतेः परिणामात्" इति अध्यारोपकाले
रिणामदृष्टिः सूचिता, ब्रह्मैव कनककुंडलन्यायेन जगदाका
परिणतम् । तथा च श्रुतिः—"तदात्मानश्स्वयमकुरुत सत्यं च
नृतं च सत्यमभवत्" । सत्यं व्यावहारिकं जाग्रद्रज्ज्वादि अ
प्रातिभासिकं स्वप्नरज्जूरगादि एतदुभयात्मकं सत्यं कालत्रयाबा
ब्रह्मैव प्राप्तमिति श्रुत्यर्थः । तथा "आत्मनि चैवं विचित्राश्च हि"
स्वप्नकाले आत्मनि जाग्रत्काले मायेन्द्रजालमरीचिकोदकादयो
प्रसिद्धतराः सृष्टयो भवन्ति विचित्राश्च ताः। न च ताः न सन्तीति
वक्तुं शक्यम् । अनुभूयमानत्वात्। नापि सन्तीति, ज्ञानेन सद्यो
धात् । एवं ब्रह्मण्यपि विचित्राऽनिर्वचनीया सृष्टिरस्तीति सू
र्थः । तथा चास्य जगतोऽनिर्वचनीयत्वं श्रुतिराह—"को अ
वेद क इह प्रावोचत्कुत आजाता कुत इयं विसृष्टिः" इति तं क
ऽपि न वेद न कोऽपि प्रावोचादिति श्रुत्यर्थः । सेयं व्यामि
दृष्टिः । अपवाददृष्टिस्तु "आह च तन्मात्रम्" इति ( ब्र० सू०
अ० ३ पा० २ सू० १६ ) सूचिता । "स यथा सैंधवखि
उदके प्रास्त उदकमेवानुविलीयेत स यथा सैंधवघनोऽनंतरोऽ
ह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्मा कृत्स्नः प्रज्ञानघन
इति श्रुत्या च दर्शिता । यथा जले प्रास्तः सैंधवखिल्यः स्वोपाद
उदके जले लीनमनु स्वयमपि लीयते अन्यथा करकाल
जले परिमाणाधिक्यं स्यात् अतः स अन्तरं कारणं बाह्यं का
भावः तदुभयवर्जितः केवलरसमात्रात्मना जलेऽभिव्यक्तो ह

त्रिधाम ॥ ३६ ॥

य एवं स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनाऽवस्थितः स एव ब्राह्मण इति दर्शयिष्यन् तद्व्यतिरिक्तस्य सर्वस्य तदज्ञानमूलत्वं दर्शयति—

सनत्सुजात उवाच—

एकवेदस्य चाज्ञानाद्वेदास्ते बहवोऽभवन् ॥
सत्यस्यैकस्य राजेंद्र सत्ये कश्चिदवस्थितः॥ ३७ ॥

एकवेदस्येति । एकस्य वेदस्य—वेद्यामिदंरूपम्

---

एवमयं प्रपञ्चः कार्यकारणोभयस्वरूपहीनः समाधौ केवलप्रज्ञानघनोऽभिव्यज्यते इति श्रुत्यर्थः । अनेन दृष्टित्रयेण जनबोधार्थं शास्त्रं प्रवृत्तं यथोक्तं संक्षेपशारीरके—

आरोपदृष्टिरपवादकदृष्टिरेवं
व्यामिश्रदृष्टिरिति दृष्टिविभागमेनम् ।
सङ्गृह्य सूत्रकृदयं पुरुषं मुमुक्षुं ।
सम्यक्प्रबोधयितुमुत्सहते क्रमेण ॥ इत्यादिना—
श्रुतिवचांसि मुनिस्मरणानि च
द्वयविशारदगीरपि सर्वशः ।
त्रयमपेक्ष्य दृशां त्रितयं विना ।
नहि घटामुपयान्ति कदाचन ॥ इत्यन्तेन ॥ ३६ ॥

एवमनेकेषु पक्षेषूपस्थापितेषु सिद्धान्तमाह एकस्येति । ब्रह्मैव एकं वेद्यं तच्च सत्यं कालत्रयेऽप्यबाध्यं तस्य अज्ञानात् बहूनि वेद्यानि उपास्यानि अब्रह्मभूतानि कृतानि कल्पितानि । वेदे

अनिदंरूपं वेदनं वेदः ज्ञानम्—एकस्याद्वितीयस्य संविद्रूपस्येत्यर्थः । तस्यैकवेदस्य ब्रह्मणोऽनवगमात् ऋगादयो वेदा बहवोऽभवन् । अत्र ऋगादिवेदास्तत्प्रतिपत्त्यर्थं विचारं कुर्वतीति वेदाख्यामवाप्नुयुः ।

अथवा, सद्भावं साधयंतीति वेदाः, विदंति वेदन हेतुभूता इति वा वेदाः । अथवा, ब्रह्माधीनमात्मा लभंत इति वेदाः । ब्रह्मण आत्मतया लाभहेतव इति वेदाः । विद विचारणे । विद सत्तायां । विद ज्ञाने विदलृ लाभे । एतेषां धातूनां विषये वर्त्तते यस्माच्च वेदा इत्युक्ताः । तदेकवेदस्वरूपं किमिति चेत् "सत्यं ज्ञानमनंतं ब्रह्म" "एकमेवाद्वितीयम्" इति श्रुतेः । तस्मात् सत्यस्य वेदस्वरूपस्य ब्रह्मणोऽनव गमात् वेदा बहवो व्याख्याताः सर्वे वेदास्तदर्थदर्शन

---

सत्यप्रतिपत्त्यर्थम् तेषामब्रह्मत्वं वेद एवाह "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति । तस्मिश्च सत्ये ब्रह्मणि कश्चिदे अवस्थितः, ब्रह्मलाभोऽतिदुर्घट इत्यर्थः । श्रुतिरप्यज्ञानकार्यं जगत आह—"तुच्छेनाभ्वपिहितं यदासीत् तमसस्तन्महिनाऽजायतैकम्" इति । तुच्छेन रज्जूरगादिवदध्यस्तेन मिथ्याभूतेन तमसा आभु सर्वव्यापकं ब्रह्म अपिहितं आच्छादितं यत् आसीत् तद् एकमेव सत् तमसः अज्ञानस्य, तपस इति पाठे आलोचनस्य संकल्पमात्रस्य महिना माहात्म्येन अजायत प्रपंचाकारेण आविर्भूतं

हेतवः, हे राजेंद्र, त्वं पुनः कच्चित्सत्ये स्थितोऽसि ? इति ॥ ३७ ॥

भूयो मे शृणु—

य एनं वेद तत्सत्यं प्राज्ञो भवति नित्यदा ॥
दानमध्ययनं यज्ञो लोभादेव प्रवर्तते ॥ ३८ ॥

किमर्थम्? नो चेत्, तत्र यद्भवति तच्छृणु—

सत्यात्प्रच्यवमानानां संकल्पा वितथाऽभवन् ॥
ततः कर्म प्रतायेत सत्यस्यानवधारणात् ॥ ३९ ॥

सत्यादिति । सत्यादिलक्षणाद्ब्रह्मणः प्रच्यवमानानां संकल्पा वितथा अभवन् व्यर्थाः भवंति । स्वाभाविकसत्यसंकल्पादयो न सिध्यंतीत्यर्थः । ततः कर्म यज्ञादि प्रतायेत विस्तृतं भवेदित्यर्थः । तदेतत्सर्वं सत्यस्य सत्यादिलक्षणस्य ब्रह्मणोऽनवधारणात् अनवगमात् । आत्माज्ञाननिमित्तत्वात्संसारस्य यावत्परमात्मानमात्मत्वेन

---

यथा रज्जुरज्ञानात्मना सर्पाकारेणाविर्भवति तद्वदिति श्रुत्यर्थः ॥ ३७ ॥ ३८ ॥

सत्यादिति । तथा भवेत् परमानंदात्प्रच्युतस्य क्षुद्रानंदविषयोऽभिलापो भवेत् ततश्चासौ यज्ञो ज्योतिष्टोमादिः प्रतायेत संतन्यते सत्यस्य वेदवचनस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादेः अवधारणात् प्रामाण्यनिश्चयात्, संकल्पो वितथो भवेदिति पाठे सत्यब्रह्मस्यैव सत्यसंकल्पत्वं अन्यस्य तु संकल्पो वंध्य इत्यर्थः ।

साक्षान्न जानाति तावदयं तापत्रयाभिभूतो मकरादिभि रिव रागादिभिरितस्ततः समाकृष्यमाण इतस्ततो मोमु ह्यमानोऽसत्यसंकल्पः स्वर्गपश्वन्नादिदेहसाधनेषु वर्त इत्यर्थः ॥ ३९ ॥

इदानीं ब्राह्मणलक्षणमाह—

विद्याद् बहुपठंतं तु बहुवागिति ब्राह्मणम् ॥
य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ॥४०

विद्यादिति। बहुपठंतम् आख्यानपंचमवेदाध्यायिनं बहुवागिनि विद्यात्, न साक्षाद् ब्राह्मणमिति। कस्तर्हि मुख्यो ब्राह्मणः? इति चेत्—य एव सत्यादिलक्षणान्नापैति न क्षरति चित्सदानंदाद्वितीयब्रह्मरूपेणावतिष्ठते स एव ब्राह्मणस्त्वया ज्ञेयः नेतरो यः सत्यात् च्युतः अकृतार्थः सन् कर्मणि प्रवर्त्तेत। तथाच ब्रह्मविदमेव ब्राह्मणं दर्शयति श्रुतिः—"मौनं चामौनं च निर्विद्याथ ब्राह्मणः

---

सनत्पाठे यज्ञोऽपि सत्यस्यानवधारणादापारोक्ष्येण अनिश्चयात् प्रवर्तते, ज्ञाते तु सत्ये एतद्बुध्वा बुद्धिमान्स्यात् कृतकृत्यश्च भवतीति कृतकृत्यत्वमेव स्मर्यते ॥ ३९ ॥

एतदेव स्पष्टयति—विद्यादिति। विद्यादित्यर्द्धेनापरोक्षज्ञानस्यादृष्टिरिह उच्यते। उक्तमेवोपसंहरति—सत्यात्प्रत्यगद्वया दात्। तथाच श्रुतिः। "यो वा एतदक्षरं गार्गि विदित्वाऽस्मा

इति "विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति" इति च ॥ ४० ॥

भवेदेतदेवं यदि तदेव ब्रह्म सिद्ध्येत, न च सिद्ध्यति अन्यपरत्वाद्वेदस्येति तत्राह—

छंदांसि नाम द्विपदां वरिष्ठ
स्वच्छंदयोगेन भवंति तत्र ॥
छंदोविदस्तेन च तानधीत्य
गता हि वेदस्य न वेद्यमार्याः ॥ ४१ ॥

छन्दांसीति । हे द्विपदां वरिष्ठ, छंदांसि वेदाः स्वच्छन्दयोगेन स्वच्छन्दता स्वाधीनता यथाकाममित्यर्थः । तत्रैव परमात्मनि प्रमाणं भवंति । श्रूयते च—"सर्वे वेदा यत्पदमामनंति" "वेदैश्च सर्वैरहमेव वेद्यः" इति च । पुरुषार्थपर्यवसायित्वाद्वेदस्य तद्व्यतिरिक्तस्य अनित्याशुचिदुःखानुविद्धत्वेन पुरुषार्थत्वाभावात्तत्स्वरूपत्व-

---

ल्लोकात्प्रैति स ब्राह्मणः" इत्यपरोक्षज्ञानिनो ब्राह्मणत्वमुक्त्वाऽर्थादितरस्याब्राह्मणत्वं दर्शयति ॥ ४० ॥

छन्दांसि नामेति । द्विपदां मनुष्याणां मध्ये वरिष्ठ । तत्र सत्ये ब्रह्मणि विषये छंदांसि वेदाः स्वच्छंदयोगेन स्वातंत्र्यसंबंधेनैव भवंति कर्मकांडार्थज्ञानवत् ब्रह्मकांडार्थज्ञानं न मध्येऽनुष्ठानांतरमपेक्षते । तथाहि "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च" इतिश्रुत्या दर्शनसार्वात्म्ययोर्मध्ये तिष्ठन् गायती-

तत्साधकत्वतत्प्रतिपादकत्वेन वेदानां प्रमाणत्वमित्यर्थः
यस्माद्वेदाः स्वच्छन्दयोगेन तत्रैव परमात्मनि प्रमा
भवंति, तेन च हेतुना तान्वेदानधीत्य अवगम्य वेदांत
वणादिकारणं कृत्वा गताः प्राप्ताः वेदस्य संविद्रूप
परमात्मनः स्वरूपं, न वेद्यं प्रपंचम् आर्याः पंडित
ब्रह्मविदः ॥ ४१ ॥

एवं तर्हि वेदवेद्यत्वे "अन्यदेव तद्विदितादथो
अविदितात्" "यतो वाचो निवर्तंते" इत्यादिविरोधः प्र
ज्येतेत्यत आह—

न वेदानां वेदिता कश्चिदस्ति
वेद्येन वेदं न विदुर्न वेद्यम् ॥
यो वेद वेदं स च वेद वेद्यं
यो वेद वेद्यं न स वेद सत्यम् ॥ ४२ ॥

न वेदानामिति। न वेदानामृगादीनां मध्ये कश्चि

---

सादौ तिष्ठतिगायत्र्योर्मध्ये इव कार्यांतरं वार्यते। तेन च ह
सत्येन चकार एवकारार्थे तेनैवेत्यर्थः। छन्दोविदो भवंति न
मात्रज्ञानेन तान् छन्दोज्ञान् अधीत्य प्राप्य आर्याः वेदस्य
वेदनीयं ब्रह्म न गता इति न, अपितु गताः प्राप्ता एवेत्यर्थः
एतेन "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेद्" इत्यस्याः श्रुतेरर्थो
दर्शितः ॥ ४१ ॥

तथापि ब्रह्मणो दुर्ज्ञेयत्वमाह—नेति। वेदानां वेद्यानां

दपि वेदः परमात्मनो वाचामगोचरस्य संविद्रूपस्य वेदिताऽस्ति; कस्मात्? यस्माद्वेद्येन जडरूपेण वेदं संविद्रूपं न विदुः। न वेद्यं, प्रपंचमपि न विदुः। संविदधीनत्वात्सर्वसिद्धेः। यस्मात्संविदधीना सर्वसिद्धिस्तस्माद्यो वेदं संविद्रूपं परमात्मानं वेद जानाति स च वेद वेद्यमिदं सर्वम्। तथाच श्रुतिः—"आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" इति। "एकविज्ञानेन सर्वं विज्ञातम्" इति च। यो वेद्यमिदं रूपं वेद जानाति स सत्यं सत्यादिलक्षणं परमात्मानं न वेद ॥ ४२ ॥

---

कारादीनामचेतनानां मध्ये कश्चिद्वेदिता नास्ति अतो हेतोर्वेद्येन चेतसा वेदं वेदत्रोऽध्यमात्मानं न विदुः। नापि वेद्यमनात्मानमपि न विदुः। आत्माऽनात्मा च न जडस्य विषयाविसर्थः। ननु जडया धीवृत्त्या आत्मा ज्ञायत एव "दृश्यते त्वग्र्यया बुद्ध्या" इति श्रुतेरित्याशंक्याह वेदमात्मनं यो वेद स एव वेद्यमनात्मानं सर्वं वेद, आत्मप्रभवत्वात्सर्वस्य। यस्तु बहिर्मुखः वेद्यमनात्मानं वेद स सत्यं ब्रह्म न वेद तथाच श्रुती भवतः। "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्। परांचि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नांतरात्मन्" इति। व्यतृणत् हिंसितवान् ॥ ४२ ॥

नन्वेवं तर्हि "वेद्येन वेदं न विदुर्न वेद्यम्" इति वदतो अनात्मविदः प्रपंचासिद्धिरेवेत्युक्तं भवतीत्याशंक्याह—

यो वेद वेदान्स च वेद वेद्यं
न तं विदुर्वेदविदो न वेदाः ॥
तथाऽपि वेदेन विदंति वेदं
ये ब्राह्मणा वेदविदो भवंति ॥ ४३ ॥

यो वेदेति । यो वेद जानाति ऋगादीन्वेदान् स च वेद वेद्यं सोऽप्यनात्मविदविच्छिन्नेन संवेदनेन वे[द्यं] प्रपञ्चं वेद । नन्वेवं चेत्तर्हि वेदवित्परमात्मानं विजा[]नीयादित्याशंक्याह—न तं परमात्मानं वाचामगोचरं वि[]दुर्वेदविदः । न वेदाः, वेदा अपि न तं विदुः न तं वि[ष]यीकुर्वन्तीत्यर्थः । कथंचिल्लक्षणया बोधयन्तीति भावः। नन्वेवं तर्हि कथमौपनिषदं ब्रह्म स्यात्,नेत्याह—तथा[पि] वेदेन विदन्ति वेदं यद्यपि वागाद्यविषयं ब्रह्म तथा[पि]

---

किंच यश्चिदात्मा सर्वेषां प्रत्यक्त्वेन प्रसिद्धः, वेदान् वेदयंति वेदाः तान् प्रमाणानि वेद स एव वेद्यं प्रमेयमपि वेद नतु तानि तं विदुर्ईत्याद् तं च "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रो[त्रं] मनसो ये मनो विदुः" इति प्राणादीनां प्रवर्तकत्वेन प्रसिद्धं वेद[ं] प्रमाणानि वेदविदः प्रमातारश्च न विदुः "यतो वाचो नि[व]

वेदेन ऋगादिना विदन्ति जानन्ति वेदं संविद्रूपं परमात्मानम् । के ते ? ये ब्राह्मणा वेदविदो भवन्ति । वेदानाम् वेदप्रतिपादनप्रकारं जानंतीत्यर्थः ॥ ४३ ॥

कथं तर्हि अविषयमेव ब्रह्म वेदाः प्रतिपादयंतीत्याशंक्याह—

धामांशभागस्य तथाहि वेदा
यथा च शाखा च महीरुहस्य ॥
संवेदने चैव यथाऽऽमनन्ति ।
तस्मिन्हि नित्ये परमात्मनोऽर्थे ॥ ४४ ॥

धामेति । धामांशभागस्य, "रात्रिधामश्चंद्रः" इति श्रुतेः । चंद्रांशभागस्य । प्रतिपच्चन्द्रकलादर्शने यथा महीरुहस्य वृक्षस्य शाखा हेतुर्भवति । तथा वेदास्त-

---

अप्राप्य मनसा सह" इति तस्य वाङ्मनसातीतत्वश्रुतेः । यद्यप्येवं तथापि वेदं वेदितारमात्मनं वेदेनैव प्रमाणेन अहं ब्रह्मास्मीत्यादिना विदंति जानंति, के ते ये ब्राह्मणाः वेदविदो वेदं पाठतोऽर्थतोऽनुष्ठानतश्च विदंति ते वेदविदः अध्ययनयज्ञादिना संस्कृतचित्ता एव वाक्यादात्मानं लक्षणया जानंति न त्वन्ये इत्यर्थः ॥४३॥

इदमेव दृष्टांतेन प्रतिपादयति—धामांशेति ॥ धाम तेजः तन्मयाः अंशा यस्य स तेजोमयोऽर्थश्चंद्रः तस्य भागः कला प्रतिपद्गता तस्य संवेदने ज्ञापने यथा च यथैव हि प्रसिद्धं महीरुहस्य शाखा उपादीयते तथाहि तथैव वेदाः परमात्मनः संवेदनेऽर्थे परमपुरुषार्थरूपे सत्ये सर्वथाऽप्यवेध्ये वेदाः उपादीयंते इति अ:प्र·

स्यैव परमात्मनः स्वरूपभूतसंवेदने नित्येऽविनाशिन्य
र्थे परमपुरुषार्थरूपे परमानन्दस्वरूपे हेतवो भवन्ति
न पुनः साक्षाद्वाचामगोचरं परमात्मानं प्रतिपादयन्ति
एवमामनन्ति ॥ ४४ ॥

य एवं वेदानां वेदरूपात्मप्रतिपादनप्रकारमव
म्य व्याचष्टे, सोऽपि ब्राह्मण इत्याह—

अभिजानामि ब्राह्मणमाख्यातारं विचक्षणम् ॥
परं हि तत्परं ब्रह्म जानात्येव हि ब्राह्मणः ॥ ४५

अभीति । यो वेदप्रतिपादनप्रकारं व्याच
तमाख्यातारं विचक्षणं ब्राह्मणमभिजानामि । ननु बा
ल्यपाण्डित्यादिकं निर्विद्यावस्थितमेव ब्राह्मणं श्रु
श्रुतिः । तथाहि "ब्राह्मणः पाण्डित्यं निर्विद्य बाल्ये
तिष्ठासे तथा बाल्यं च पाण्डित्यं च निर्विद्याथ मुनि
र्भवति । मौनं चामौनं च निर्विद्याथ ब्राह्मणः" इति
कथमुच्यते अभिजानामि ब्राह्मणमाख्यातारं वि

---

नंति । तं त्वौपनिषदं पुरुषं पृच्छामीत्यौपनिषदत्वविशेषणात्
चामगोचरत्वश्रुतेश्च सोऽयं देवदत्त इत्यादिवाक्यवत्तत्त्वमस्यादि
वाक्यमपि लक्षणया स्वार्थं प्रमापयत्येवेत्यर्थः ॥ ४४ ॥

एवं गुरूपसदनपूर्वकं वाक्यार्थप्रतिपत्त्युपायमुक्त्वा गुरुल
णान्याह—अभीति । ब्राह्मणं ब्रह्मविदं लक्षणतोऽभिजानामि । ल
क्षणमेवाह आख्यातारम् उपक्रमोपसंहारैकरूप्यादिषड्विधतात्प

क्षणमिति तत्राह—वेदानां वेदप्रतिपादनप्रकारं मयोक्तं यो हि जानाति परं हि तत्परं ब्रह्म जानात्येव यो हि पाण्डित्यं निर्विद्य स्थितः स क्षिप्रं बाल्यादिकं निर्विद्य ब्राह्मणो भवतीत्यभिप्रायः ॥ ४५ ॥

यस्मात्सत्यनिष्ठस्यैव ब्राह्मणत्वप्रसिद्धिस्तस्माद्विषयपरो न भवेदित्याह—

नास्य पर्येषणं गच्छेत्प्रत्यर्थिषु कथंचन ।
अविचिन्वन्निमं वेदे ततः पश्यति तं प्रभुम् ॥ ४६ ॥

नास्येति । नास्य जगतः पर्येषणं गच्छेद्विषयान्वेषणपरो न भवेदित्यर्थः । प्रत्यर्थिषु प्रतिपक्षभूतदेहेंद्रियादिनिमित्तम् अविचिन्वन्विषयसंचयमकुर्वन्निमं प्रत्यगात्मानं वेदे उपनिषत्सु तत्त्वमस्यादिवाक्येषु, ततः पश्चात्पश्यति तं प्रभुं परमात्मानं आत्मत्वेन जानातीत्यर्थः ।

अथवा, नास्यात्मनः पर्येषणम् अन्वेषणं गच्छेत् । प्रत्यर्थिषु प्रतिपक्षभूतदेहेंद्रियादिषु देहेंद्रियतद्धर्मानात्म-

---

लिंगानुसारेण वाक्यार्थवर्णनकुशलं विचक्षणं श्रुतार्थस्य युक्तिभिरनुचिंतने समर्थं निदिध्यासनपरिपाकेनापरोक्षसाक्षात्कारबलात् ॥ ४५ ॥

एतदेवाह— नास्येति । प्रत्यर्थिषु आत्मत्वेन प्रथमानेष्वनात्मसु पंचसु कोशेषु पर्येषणमन्वेषणं न गच्छेन्न कुर्यादित्यर्थः । कथंच नेत्यव्यक्तमालंबनं क्लेशसाध्यमिति सूचयति—"अव्यक्ता

त्वेन न गृण्हीयादित्यर्थः। अविचिन्वन् देहेन्द्रियत-द्धर्मानात्मत्वेन असंचिन्वन्, तत्साक्षिणमात्मानं प्रतिपद्यमानः तत्त्वंपदार्थशोधनानन्तरमिमं प्रमात्रादिसा-क्षिणं परमात्मानं पश्यति। देहेंद्रियादिकमात्मत्वेनाप्रति-पद्यमानः तत्त्वमस्यादिवाक्यैः परमात्मानमात्मत्वेन प-श्यतीत्यर्थः ॥ ४६ ॥

यस्मादेवं तस्मात्—

तूष्णींभूत उपासीत न चेच्छेन्मनसा अपि।
अभ्यावर्त्तेत ब्रह्मास्मै बह्वनन्तरमाप्नुयात् ॥ ४७

तूष्णीमिति। यस्मात्सर्वविषयपरित्याग एवात्मदर्श-नसिद्धिः, तस्मात्तूष्णींभूतः स्वात्मव्यतिरिक्तं सर्वं परि-त्यज्य केवलो भूत्वा स्वात्मानमेव लोकमुपासीत। न चेच्छेन्मनसा अपि विषयेन्द्रियेच्छां न कुर्यात्। य-स्तूष्णींभूतो विषयोपसंहारं कृत्वा स्वात्मानमेव लोकमु-पास्ते, अस्मै तूष्णींभूताय ब्राह्मणाय ब्रह्म अपूर्वादिलक्ष-अभ्यावर्तेत अभिमुखीभवेदित्यर्थः। श्रूयते च "यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनुं स्वाम्

हि गतिर्दुःखं देहवद्भिरवाप्यते" इति स्मृतेः। वेदे इममात्मा-अविचिन्वन्वेदांतन्यायानपर्यालोचयन्नित्यर्थः। ततः पश्चात् तं ... पश्यति, तं पश्यति निष्कलं ध्यायमान इति श्रुतेः ॥ ४६ ॥

तूष्णींभूत इत्यनेन वागादिबाह्येंद्रियव्यापारोपरम उक्तः।

इति । अनन्तरमाविर्भूतस्वरूपः सन् बहु भूमानं तमसः परं परमात्मानमाप्नुयात् ॥ ४७ ॥

मुनिरप्येष एवेत्याह—

मौनाद्धि मुनिर्भवति नारण्यवसनान्मुनिः ॥
अक्षरं तं तु यो वेद स मुनिः श्रेष्ठ उच्यते ॥४८॥

मौनाद्धीति । मौनात्पूर्वोक्तात्तूष्णींभावादेव मुनिर्भवति न पुनररण्यवासमात्रान्मुनिर्भवति । तेषामपि तूष्णींभूतानां मध्ये यस्तु पुनरक्षरमविनाशिनं तं परमात्मानं वेद "अयमहमस्मि" इति साक्षाज्जानाति स मुनिः श्रेष्ठ उच्यते । श्रूयते च—"एतमेव विदित्वा मुनिर्भवति" इति ॥ ४८ ॥

वैय्याकरणोऽप्येष एवेत्याह—

सर्वार्थानां व्याकरणाद्वैय्याकरण उच्यते ॥
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ॥४९॥

सर्वेति । सर्वार्थानां व्याकरणाद्वैय्याकरण उच्य-

---

नसापि नचेच्छेदित्यनेन मानसव्यापारोपरम उक्तः ॥ ४७ ॥

मौनात् ध्यानमात्रान्मुनिर्भवति न अरण्यवासाद् संन्यासमात्राद् किं तर्हि योऽक्षरं प्रत्यगात्मनो लक्षणं जगज्जन्मादिहेतुत्वं सच्चिदानंदात्मकत्वं च वेद जानाति स श्रेष्ठः संन्यासिभ्यो योगिभ्यश्च ज्ञानी श्रेष्ठ इत्यर्थः ॥ ४८ ॥

सर्वार्थानां व्याकरणाद् प्रकटीकरणात् सर्वज्ञत्वादयं ज्ञानी

ते, न पुनः शब्दैकदेशव्याकरणात् वैयाकरणो भव-
ति । भवतु सर्वार्थानां व्याकरणाद्वैयाकरणत्वं, तत्
किमिति चेत्तत्राह—तन्मूलतो व्याकरणं । पूर्वोक्ताद्
राद्धि सर्वस्य नामरूपप्रपञ्चस्य व्याकरणम् । श्रूयते
"अनेन जीवेन आत्मनाऽनुप्रविश्य नामरूपे व्याक
वाणि" इति । तस्माद् ब्रह्मण एव साक्षाद्वैयाकरणत्
व्याकरोति तत्तथा विद्वानपि तत् ब्रह्म तथैव व्या
रोतीति वैयाकरणः ॥ ४९ ॥

सर्वज्ञोऽप्ययेष एवेत्याह—

प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ॥
सत्ये वै ब्रह्माणि तिष्ठंस्तद्विद्वान्सर्वविद्भवेत ॥ ५०

प्रत्यक्षेति । प्रत्यक्षदर्शी लोकानां यः प्रत्यक्षेण
रादीन् लोकान्पश्यति स सर्वदर्शनो भवेत्, न सर्व
परमात्मानं पश्यति । असौ पुनः सत्ये सत्यादिल

---

वैयाकरण इत्युच्यते तच्च व्याकरणं केचिद्योगजधर्मप्रत्याप
वदन्ति तन्निराचष्टे । मूलत इति ॥ आत्मज्ञानाद्धि सर्ववि
श्रूयते न प्रधानज्ञानात् अन्यतो वा । मूलत इति ल्यब्लोपे पञ्च
मूलं कारणं ब्रह्म प्राप्येत्यर्थः । तत्र व्याकर्ता परमात्मैव तन्नाम
पाभ्यामेव व्याक्रियत नामरूपे व्याकरवाणीति श्रुतिभ्यामित्य
व्याकरोतीति । श्रौतव्युत्पत्तिप्रदर्शनमेतत् ॥ ४९ ॥

सार्वज्ञमपि ब्रह्मविदामनौपचारिकमित्याह—प्रत्यक्षेति

ब्रह्मणि तिष्ठन्मनः समादधाति । तद्विद्वान् सत्यादिलक्षणं ब्रह्म विद्वानात्मत्वेन सर्वं जानन् सर्वं जानातीत्यर्थः । तस्मादेष एव सर्वज्ञो न अनात्ममात्रदर्शी ॥५०॥

"यस्त्वेतेभ्यः" इत्यादिना उक्तमेवार्थं पुनरपि दर्शयति अवश्यकर्तव्यत्वदर्शनार्थम्—

ज्ञानादिषु स्थितोऽप्येवं क्षत्रिय ब्रह्म पश्यति ॥
वेदानां चारपूर्वेण चैतद्विद्वन्ब्रवीमि ते ॥ ५१ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां
वैय्यासिक्यामुद्योगपर्वणि धृतराष्ट्रसनत्कु-
मारसंवादे श्रीसनत्सुजातीये
द्वितीयोऽध्यायः ॥ २ ॥

ज्ञानेति । ज्ञानादिषु "ज्ञानं च" (२-१९) इत्यादिना पूर्वोक्तेषु स्थितोऽपि एवं यथा सत्ये तिष्ठन् ब्रह्म पश्यति एव-

---

सत्ये तिष्ठन् न तु स्वरूपांतरे देहाद्याकारे ब्राह्मणः ब्रह्मवित् तद्विद्वान् ब्रह्म विद्वानिति ब्राह्मणपदव्युत्पत्तिप्रदर्शनम् ॥ ५० ॥

अध्यायार्थमुपसंहरति—ज्ञानादिष्विति । ज्ञानं च सत्यं च दमः श्रुतं चेत्यादिषु द्वादशसु स्थितः तथा सत्यादिरूपे अष्टविधे अप्रमादे च स्थितः। एवं साधनवान् वेदेषु पूर्वोक्तेषु आरोपदृष्टिव्यामिश्रदृष्ट्यपवाददृष्टिरूपेषु आनुपूर्व्येण सोपानारोहणन्यायेन परमे पदे स्थितोऽहमेतत्स्वानुभवसिद्धं हे विद्वन् ते तुभ्यं ब्रवीमि। सोपानक्रमस्तु नृसिंहतापनीये श्रूयते "ओतानुज्ञात्रनुज्ञाऽविकल्पैः"

मेव ब्रह्म पश्यति । वेदानां चारपूर्वेण वेदांतश्रवणादिकेने
त्यर्थः । अथवा गुणांतरविधानमेतत् । ज्ञानादिषु स्थितो
ऽपि न केवलं तन्मात्रेण पश्यति अपि तु एवमेव वक्ष्य
माणप्रकारेण वेदांतविचारपूर्वेण वेदांतश्रवणपूर्वकमे
पश्यति ब्रह्म । एतद्वेदानां चारं प्रकारं, हे विद्वन् ब्रवी
मि वक्ष्यामीत्यभिप्रायः ॥ ५१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्द-
भगवत्पूज्यपादशिष्यश्रीशंकरभगवतः
कृतौ सनत्सुजातभाष्ये
द्वितीयोऽध्यायः ॥ २ ॥

---

इति । अस्यार्थः—

ओतत्वं कारणं व्याप्तिः कार्ये यद्वन्मृदो घटे ।
सर्वं ब्रह्मेति तन्निष्ठा जानते परिणामतः ॥ १ ॥
कार्यस्यासमवेतत्वं कारणे समुदीरितम् ।
तदनुज्ञातृशब्दार्थो मरौ वारिविवर्तनम् ॥ २ ॥
एतन्निष्ठास्ततो भूत्वा जगन्मिथ्येति जानते ।
अनुज्ञायां जगत्तुच्छं शशशृङ्गादिवन्मतम् ॥ ३ ॥
एवं सोपानरीत्यैवं भूमित्रितयलंघनात् ।
अविकल्पं परं यत्तदहं ब्रह्मास्मि निर्भयम् ॥ ४ ॥ इति ॥

इति उद्योगपर्वणि नैलकंठीये भारतभावदीपे सनत्सुजा-
तीयटीकायां द्वितीयोऽध्यायः ॥ २ ॥

अथ तृतीयोऽध्यायः ॥

इदानीं ब्रह्मचर्यादिसाधनप्रतिपादनानंतरं तत्प्राप्यं च ब्रह्म प्रतिपादयितुं तृतीयचतुर्थावध्यायावारभ्येते । तत्र तावद्ब्रह्मचर्यादिसाधनं श्रुत्वा तद्वेदनाकांक्षी प्राह धृतराष्ट्रः—

धृतराष्ट्र उवाच—

सनत्सुजात यदि मां परार्थां
ब्राह्मीं वाचं वदसि हि विश्वरूपाम् ॥
परां हि कार्येषु सुदुर्लभां कथां
प्रब्रूहि मे वाक्यमेवं कुमार ॥ १ ॥

सनत्सुजातेति । हे सनत्कुमार, यद्यस्मादिमां परार्थां ब्राह्मीं ब्रह्मसंबंधिनीं वाचं वदसि हि विश्वरूपां नानारूपां पराम् उत्तमां कार्येषु कार्यरूपेषु प्रपंचेषु सुदुर्लभां श्रवणायाप्यशक्यां कथां प्रब्रूहि मे वाक्यं एवंभूतं कुमार, यस्मात्त्वं ब्राह्मीं वाचं परमपुरुषार्थसाधनभूतां सुदुर्लभां वदसि तस्मात्त्वं वक्तुमर्हसीत्यभिप्रायः॥१॥

---

एवं आत्मज्ञानमार्गं श्रुत्वा तस्यांतरंगसाधनं योगं श्रोतुं पृच्छति—सनत्सुजातेति । परां उत्कादपि अत्युत्कृष्टां ब्राह्मीं ब्रह्मप्रापिकां वाचं उपनिषदं वदसे जानीषे । भासनोपसंभाषाज्ञानेति तङ् । विश्वं रूप्यते प्रकाश्यतेऽस्यां, यां ज्ञातवतोऽन्यत्र ज्ञातव्यं नावशिष्यत इत्यर्थः । कार्येषु प्रपंचेषु सुदुर्लभां कथां कथनीयां प्रब्रूहि हे कुमार इदं मे मम वाक्यं त्वां प्रति प्रार्थनारूपं वचनं अवधेहीति शेषः ॥ १ ॥

एवं पृष्टः प्राह भगवान्—

सनत्सुजात उवाच—

नैतद्ब्रह्म त्वरमाणेन लभ्यं
यन्मां पृच्छस्यभिषंगेण राजन् ॥
बुद्धौ प्रलीने मनासि प्राचिंत्या
विद्या हि सा ब्रह्मचर्येण लभ्या ॥ २ ॥

नैतदिति । नैतद् ब्रह्म त्वरमाणेन पुरुषेण ल॰ यत् ब्रह्म मां पृच्छसि अभिषंगेण राजन् । कथं त॰ लभ्यमित्याह—बुद्धौ अध्यवसायात्मिकायां प्रलीने ॰ नासि प्राचिंत्या विद्या हि सा, यदा पुनः संकल्पावि॰ रूपात्मकं मनो विषयेभ्यः परावृत्य स्वात्मन्येव निश्च॰ भवतीत्यर्थः । येयं बुद्धौ प्रलीने मनसि प्रचिंत्या ॰ विद्या ब्रह्मचर्येण वक्ष्यमाणेन लभ्या ॥ २ ॥

---

ब्रह्मविद्यायाः दुर्लभत्वं दर्शयन्सनत्सुजात उवाच—नैतदि॰ हृष्यसि अहं ब्रह्मविद्याधिकार्यस्मीति हृष्यसि । पाठांतरे अ॰ षंगेण निर्बंधेन । विद्यालक्षणमाह—बुद्धाविति । सर्वेषामिंद्रिया॰ निरोधेन मनोमात्रमनुपरतं संकल्पाद्यात्मकं तिष्ठति । तस्मि॰ अहं ब्रह्मास्मीति निश्चयस्वभावायां बुद्धौ विलीने सति प्राचिं॰ प्रगतं चिंत्यं यस्यां सा निरुद्धसर्ववृत्तिका काचिदवस्था विद्य॰ च्यते । सा च ब्रह्मचर्येण गुरुकुलवासेन लभ्या ॥ २ ॥

किंच—

आद्यां विद्यां वदासि हि सत्यरूपां
या प्राप्यते ब्रह्मचर्येण सद्भिः ॥
यां प्राप्यैनं मर्त्यलोकं त्यजंति
या वै विद्या गुरुवृद्धेषु नित्या ॥ ३ ॥

आद्यामिति । आद्यां सर्वादिभूतब्रह्मविषयां विद्यां वदासि हि सत्यरूपां परमार्थरूपां मे ब्रूहीति ।

यद्वा, आद्यामकार्यभूतां असत्यप्रपंचाविषयां विद्यां वदसि तस्मादत्वरमाणेन ब्रह्मचर्यादिसाधनोपेतेन उपसंहृतांतःकरणेनैव लभ्येत्यर्थः । या प्राप्यते ब्रह्मचर्येण सद्भिः । या प्राप्य एनं मर्त्यलोकं त्यजंति । या वै विद्या गुरुवृद्धेषु गुरुणा विद्याप्रदानादिना वृद्धेषु वर्द्धितेषु शिष्येषु नित्या नियता ॥ ३ ॥

एवमुक्ते ब्रह्मचर्यविज्ञानायाह धृतराष्ट्रः—

धृतराष्ट्र उवाच—

ब्रह्मचर्येण या विद्या शक्या वेदितुमंजसा ॥
तत्कथं ब्रह्मचर्यं स्यादेतद्ब्रह्मन्ब्रवीहि मे ॥ ४ ॥

---

किंच आद्यामिति । बुद्ध्याद्युपाधिसंबंधजनितकालुष्याद्विविक्ततया न व्यक्तमव्यक्तं ब्रह्म तस्य विद्याम् । अयंभावः—यद्यपि ब्रह्म नित्यापरोक्षं आत्मत्वात् तथापि अज्ञानाद्यावृतत्वात् तस्य विविक्तस्य परोक्षत्वात्तदापरोक्ष्याय यत्नो युक्त इति ॥ ३ ॥

ब्रह्मचर्येणेति । या विद्या ब्रह्मचर्येण वेदितुं श
क्या तत्साधनभूतं ब्रह्मचर्यं कथं स्यादेतद् ब्रह्मचर्यं
ह्मन् ब्रवीहि मे ॥ ४ ॥

एवं पृष्टः प्राह भगवान्सनत्सुजातः—

सनत्सुजात उवाच—

आचार्य्ययोनिमिह ये प्रविश्य
भूत्वा गर्भं ब्रह्मचर्यं चरंति ॥
इहैव ते शास्त्रकारा भवंति
विहाय देहं परमं यांति सत्यम् ॥ ५ ॥

आचार्येति । आचार्ययोनिमिह ये प्रविश्य आच
र्यसमीपं गत्वेत्यर्थः । भूत्वा गर्भं उपसदनादिना शि
भूत्वा ब्रह्मचर्यं गुरुशुश्रूषादिकं कुर्वंति । इहैवास्मिन्
के शास्त्रकाराः शास्त्रकर्त्तारः पंडिता भवंति । त
बाल्यादिकं निर्विद्य ब्राह्मणत्वारब्धकर्मक्षये विहाय देहं प
यांति, सत्यं सत्यादिलक्षणं परमात्मानं प्राप्नुवंति ॥

---

अंजसा आर्जवेन ॥ ४ ॥

आचार्येति । योनिः स्थानं "योनिष्ट इंद्र निपदे अकारि
योनौ निपद तं सरूपा" इत्यादौ दर्शनात् । गर्भं भूत्वा
निष्कपटसेवया अंतरंगत्वं प्राप्येत्यर्थः । शास्त्रकाराः शास्त्रक
ब्रह्मण्येव श्रुतं "महतो भूतस्य निःश्वसितमेतदृग्वेदः" इत्यादि
गुरोरनुग्रहादिहैव ब्रह्मभावं प्राप्नुवंतीत्यर्थः । परमं अपुनरा
सत्यं ब्रह्मणा सह ऐक्यं यांति ॥ ५ ॥

किंच—

अस्मिँल्लोके विजयंतीह कामान्
ब्राह्मीं स्थितिमनुतितिक्षमाणाः ॥
त आत्मानं निर्हरंतीह देहात्
मुंजादिषीकामिव धीरभावात् ॥ ६ ॥

अस्मिन्निति । अस्मिँल्लोके विजयंतीह कामान् ब्राह्मीमेव स्थितिं ब्रह्मण्येव स्थितिम् अनुतितिक्षमाणाः अनुदिनं क्षममाणाः ते आत्मानं देहेंद्रियादिभ्यो निष्कृष्य तत्साक्षिणं चिन्मात्रं निर्हरंति पृथक् कुर्वंति । किमिव? मुंजादिषीकामिव । यथा मुंजादिषीकामंतस्थां निर्हरंति, एवं कोशपंचकेभ्यो निष्कृष्य सर्वात्मानं प्रतिपद्यंत इत्यर्थः । केन ? धीरभावात् धैर्येण । श्रूयते च कठवल्लीषु

अंगुष्ठमात्रः पुरुषोऽतरात्मा सदा जनानां हृदये सन्निविष्टः ॥

तं ह स्वाच्छरीरात्प्रवृहेन्मुंजादिवेषीकां धैर्येण तं विद्यात् शुक्रममृतम् इति ॥ ६ ॥

"आचार्ययोनिमिह" इति आचार्यस्य योनित्वं दर्शितम् । तत्कथं मातापितृव्यतिरेकेण आचार्यस्य योनित्वमि-

---

अस्मिन्निति । ये जितकामाः ब्राह्मीं स्थितिं प्राप्तुं ये च द्वंद्वसहाः ते देहादात्मानं निर्हरंति पृथक्कुर्वंति । श्रुतिश्च "तं स्वाच्छरीरात्प्रवृहेन्मुंजादिव इषीकां धैर्येण" इति । प्रवृहेत् पृथक् कुर्यात् ॥६॥

त्याशंक्य स एव साक्षाज्जनयितेत्याह—

शरीरमेतौ कुरुतः पिता माता च भारत ।

आचार्यतश्च यज्जन्म तत्सत्यं वै तथामृतम् ॥ ७

शरीरमेताविति । शरीरमेवास्य तौ मातापि[तरौ]
कुरुतः, नात्मानं स्वरूपेण जनयतः यदिदं देहद्वया[त्म]
ना जन्म तदसत्यम्, आचार्यतस्तु यदिदं चित्सदा[न]
द्वितीयब्रह्मात्मना जन्म जननं तत्सत्यं परमार्थभूत[म्]
तथैवामृतं विनाशवर्जितं तस्मात्स एव जनयितेत्यर्थ[ः]
श्रूयते च—प्रश्नोपनिषदि—"त्वं हि नः पिता यो[ऽ]
स्माकं अविद्यायाः परं पारं तारयसि" इति । तथा चा[ह]
पस्तंबः—"स हि विद्यातस्तं जनयति तत् श्रेष्ठं ज[न्म]
शरीरमेव मातापितरौ जनयतः" इति ॥ ७ ॥

यस्मादाचार्याधीना परमपुरुषार्थसिद्धिस्तस्मात्—

स आवृणोत्यमृतं संप्रयच्छन्
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥
गुरुं शिष्यो नित्यमभिवादयीत
स्वाध्यायमिच्छेच्च सदाऽप्रमत्तः ॥ ८ ॥

---

आचार्यतः यज्जन्म तदेव सत्यं यथा ब्राह्मणस्य सा[वि]
प्राप्त्या सावित्रं द्वितीयं जन्म । एवं आचार्यात् परब्रह्मवि[द्या]
प्त्याऽपि तस्य जन्मांतरं भवति । तच्च मोक्षहेतुत्वा[दि]
णसंयुक्तम् ॥ ७ ॥

सेति । स आवृणोति आपूरयति अमृतं पूर्णानंदं ब्रह्म, आत्मत्वेन संप्रयच्छन्. तस्मै आचार्याय न द्रुह्येत् द्रोहं नाचरेत् । तथाच श्रुतिः—

"यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ॥
तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः" इति ।

तथा चापस्तंबः "तस्मै न द्रुह्येत् कदाचन स हि विद्यातस्तं जनयति" इति । कृतमस्य जानन्, अस्येति तृतीयार्थे षष्ठी । अनेनात्मनः कृतमुपकारं जानन् । कथं तर्हि कर्त्तव्यमित्याह—गुरुं शिष्यो नित्यमभिवादयीत देवमिवाचार्यमुपासीत । तथाच श्रुतिः—"यस्य देवे" इति । तथा स्वाध्यायमिच्छेत् श्रवणादिपरो भवेच्च । सदाऽप्रमत्तः अप्रमादी सन् ॥ ८ ॥

इदानीं चतुष्पादब्रह्मचर्यं श्लोकचतुष्टयेनाह—

शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः ॥
ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते ॥ ९ ॥

---

आचार्यमाहात्म्यप्रख्यापकं मंत्रं पठति—स आवृणोतीति । यः आचार्यः वर्णान् ब्राह्मणादीन् अवितथेन वितथमनृतमनात्मा जडं, तदन्येन सत्येन चिदात्मना प्रकर्षेण आवृणोति स बाह्याभ्यंतरं वासयति, द्वैतोत्थभयनिवारणेन पालयतीत्यर्थः । तस्य फलमाह—अमृतं संप्रयच्छन्निति । अमृतं मोक्षं कृतं तत्कृतमुपकारं अप्रमत्तः गुरुशुश्रूषायां सावधानः ॥ ८ ॥

शिष्येति । "आचार्ययोनिमिह" इत्यादिना उ
क्रमेण शुचिर्विद्यामाप्नोति यत्, तत् ब्रह्मचर्यस्य
प्रथमः पाद उच्यते ॥ ९ ॥

यथा नित्यं गुरौ वृत्तिर्गुरुपत्न्यां तथाऽऽचरेत् ॥
तत्पुत्रे च तथा कुर्वन् द्वितीयः पाद उच्यते ॥१०

यथेति स्पष्टोऽर्थः श्लोकः। तथा चोक्तम्—"आचार्ये
चार्यदारेषु वृत्तिराचार्यपुत्रे च तथा वृत्तिश्च" इति॥१०

आचार्येणात्मकृतं विजानन्
ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन ॥
यन्मन्यते तं प्रति हृष्टबुद्धिः
स वै तृतीयो ब्रह्मचर्यस्य पादः ॥ ११ ॥

आचार्येणात्मनः कृतमुपकारं विजानन् ज्ञात्वा
र्थं वेदार्थं परमपुरुषार्थं ज्ञात्वा अवगम्य भावितोऽस्मी
त्यनेन स्वाभाविकचित्सदानंदाद्वितीयब्रह्मात्मना यथा
दुत्पादितोऽस्मीति चिंतयन् तमाचार्यं प्रति हृष्टबु

---

शिष्यवृत्तिः सायंप्रातर्भिक्षणेन जीवनं तेनैव क्रमेण न तु
वैश्योपजीवनेनेत्यर्थः ॥ ९ ॥

ब्रह्मचर्यस्य प्रथमं पादमुक्त्वा द्वितीयं पादमाह—यथेति ॥

प्राप्तविद्यो विद्यासुखेन हृष्यन् आचार्यं यत् अत्यंतं
यति स ब्रह्मचर्यस्य तृतीयः पाद इत्याह—आचार्येणेति । आ
कृतं स्वस्मै उपकृतं विद्यादानेन तस्य च अर्थं प्रयोजनं दुः

सन् यत आत्मनः, कृतार्थत्वं मन्यते स वै तृतीयो ब्रह्मचर्यस्य पादः ॥ ११ ॥

आचार्याय प्रियं कुर्यात्प्राणैरपि धनैरपि ॥
कर्मणा मनसा वाचा चतुर्थः पाद उच्यते॥१२॥

आचार्यायेति स्पष्टोऽर्थः ॥ १२ ॥

इदानीं चतुष्पदीं विद्यां दर्शयति—

कालेन पादं लभते तथाऽयं
तथैव पादं गुरुयोगतश्च ।
उत्साहयोगेन च पादमृच्छेत्
शास्त्रेण पादं च ततोऽभियाति ॥ १३ ॥

कालेनेति । अत्र क्रमो न विवक्षितः । प्रथमं गुरुयोगतः, तत उत्साहयोगेन बुद्धिविशेषप्रादुर्भावेन, ततः कालेन बुद्धिपरिपाकेन, ततः शास्त्रेण सहाध्यायिभिः तत्त्वविचारेण । तथाचोक्तम् "आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया ॥ कालेन पादमादत्ते

---

वृत्तिमानंदावाप्तिं च ज्ञात्वा ऽनुभूय अनेनाचार्येण भावितो वर्धितोऽस्मीति जानन् यन्मन्यते ॥ ११ ॥

आचार्यायेति श्लोकस्य स्पष्टोऽर्थः ॥ १२ ॥

चतुष्पाद्ब्रह्मचर्येण लभ्यां चतुष्पदीं विद्यामाह—कालेनेति । कालेन बुद्धिपरिपाकेन उत्साहयोगेन बुद्धिवैभवेन शास्त्रेण सहाध्यायिभिर्विचारेण । क्रमस्तु न विवक्षितः । उक्तं च "आचार्यात्पा-

पादं सब्रह्मचारिभिः" इति ॥ १३ ॥

ज्ञानादीनामाचार्यसंनिधाने फलसिद्धिरित्याह—

ज्ञानादयो द्वादश यस्य रूप-
मन्यानि चांगानि तथा बलं च ॥
आचार्ययोगे फलतीति चाहु-
र्ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ॥ १४ ॥

ज्ञानेति। ज्ञानादयो "ज्ञानं च"इत्यादिना पूर्वो
द्वादश गुणाः यस्य पुरुषस्य रूपम्, अन्यानि चांग
"श्रेयांस्तु षड्विधस्त्यागः" "सत्यं ध्यानम्" इति श्लो
द्वयेन चोक्तानि। तथा बलं च तद्धर्मपरिपालनसाम
सर्वमाचार्ययोगे एव फलति, नाचार्ययोगं विना फ
ति। श्रूयते च "आचार्याद्धैव विद्या विदिता" इति
"आचार्यवान्पुरुषो वेद" इति च। ब्रह्मार्थयोगेन च ब्र
चर्यम् यदिदं गुरुसन्निधौ शुश्रूषाद्याचरणं तत् ब्र
चर्यं ब्रह्मार्थयोगेन फलति, स्वात्मनः चित्सदानं
द्वितीयब्रह्मात्मैकत्वसंपादनद्वारेण फलतीत्यर्थः ॥ १४

दमादत्ते पादं शिष्यः स्वमेधया। कालेन पादमादत्ते पादं सब्र
चारिभिः" इति ॥ १३ ॥

ज्ञानादय इति। यस्य ब्रह्मचर्यस्य रूपं स्वरूपभूता इत्यर्थः
अन्यानि चांगानि आसनप्राणजयादीनि। बलं यांगे नित्यं

ब्रह्मचर्यस्तुतिं करोति द्वाभ्याम्—

एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ॥
ऋषयश्च महाभागा ब्रह्मचर्येण चाभवन् ॥ १५ ॥
एतेनैव सगंधर्वा रूपमप्सरसो जयन् ॥
एतेन ब्रह्मचर्येण सूर्य अह्नाय जायते ॥ १६ ॥

एतेनेतिपादसप्तकस्य स्पष्टोऽर्थः । अह्नो दीप्तिसमूहः, अह्नाय जगतां द्योतनाय सूर्यश्च जायते । उक्तंच—"अह्नो दीप्तिश्च कथ्यते" इति ॥१५॥१६॥

कथमेकस्य ब्रह्मचर्यस्यानेकफलसाधनत्वमित्याह—

आकांक्षार्थस्य संयोगाद्रसभेदार्थिनामिव ॥
एवं ह्येतत्समाज्ञाय तादृग्भावं गता इमे ॥१७॥

आकांक्षेति । यथा चिंतामण्यादयो रसभेदार्थिनाम् आकांक्षार्थस्य संयोगात्तत्तदाकांक्षितमर्थं प्रयच्छंति एवमेवैतत् ब्रह्मचर्यमाकांक्षार्थस्य संयोगात् तत्तदाकांक्षितमर्थं प्रयच्छतीति ज्ञात्वा तत्तत्फलार्थं ब्रह्मचर्यं चरित्वा तादृग्भावं गता इमे देवादयः । यस्मादाचार्यसं-

---

क्तता । ब्रह्मार्थो वेदार्थः । कर्मब्रह्मणी तयोर्योगेन अधिगमने ब्रह्मचर्यं फलतीत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥

आकांक्ष्येति । रसभेदः पारदगुटिकाविशेषश्चिंतामणिसंज्ञः तं चिंतितवस्तुप्रदं अर्थयंते तेषां रसभेदार्थिनां यथा आकां-

निध्यनुष्ठितात् ब्रह्मचर्यात्परमपुरुषार्थप्राप्तिस्तस्मादाचा
योनिं प्रविश्य गर्भो भूत्वा ब्रह्मचर्यं चरेदित्यर्थः ॥ १

नन्वेवं ज्ञाननिष्ठता यदि ज्ञानस्यैव पुरुषार्थ
भवेत्; अपितु कर्मण एवेत्याशंक्याह—

अंतवंतः क्षत्रिय ते जयंति
नानंतं स्वात्मभूतं जयंति ॥
ज्ञानेन विद्वांस्तेज अभ्येति नित्यं
न विद्यते ह्यन्यथा तस्य पंथाः ॥ १८ ॥

अंतवंत इति ॥ हे क्षत्रिय, ते अंतवंतः अंत
लोकान् पितृलोकदेवलोकादीन् जयंति प्राप्नुवं
नानंतं स्वात्मभूतं परमात्मभूतं लोकं जयंति । केन
ह्यनंतलोकप्राप्तिरित्याशंक्याह । ज्ञानेन विद्वान्
अभ्येति नित्यमिति । नित्यमविनाश्यात्मभूतमेवाभ्
तेजो ज्योतिर्न कर्मणा । कस्मात्पुनर्ज्ञानेनैवाभ्येति
विद्यते ह्यन्यथा तस्य पंथाः । तस्य पूर्णानंदज्योति

---

क्ष्यस्य लिप्सितस्यार्थस्य संयोगः प्राप्तिस्ततो यादृक्भावो भ
एवमेव एते देवादयः समाज्ञाय ब्रह्मचर्यमुपेत्य तादृग्भावं
संकल्पत्वाच्चिंतितवस्तुप्रदत्वं गताः ॥ १७ ॥

अंतेति । ते अविद्वांसः अंतवतः अनित्यांल्लोकान्कर्मणा ज
विद्वांस्तु ज्ञानेन सार्वात्म्यात् सर्वं तेन ज्ञातेन ब्रह्मणा
अतस्तस्य कर्मप्राप्यं किंचित्फलं नावतिष्ठते इत्यर्थः । अ

ज्ञानमेकं मुक्त्वाऽन्यपंथा मार्गो नास्त्येव । श्रूयते— "तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यते अयनाय" इति ॥ १८ ॥

ज्ञानेन विद्वान् यद पश्यति ब्रह्म, तत्किमिवाभातीति पृच्छति धृतराष्ट्रः—

धृतराष्ट्र उवाच—

आभाति शुक्लमिव लोहितमिवाथो
कृष्णमथांजनं काद्रवं वा ॥
यद्ब्राह्मणः पश्यति यत्र विद्वान्
कथंरूपं तदमृतमक्षरं परम् ॥ १९ ॥

आभातीति । ब्राह्मणः अक्षरं परं ब्रह्म पश्यति

---

नादन्यः पंथाः अयनाय मोक्षाय न विद्यते । ज्ञानादेव तु कैवल्यमित्यवधारणात् ॥ १८ ॥

"नान्यः पन्था अयनाय विद्यते" इति श्रुत्वा "तूष्णींभूत उपासति न चेष्टेन्मनसापि च । उपावर्तस्व तद् ब्रह्म अंतरात्मनि विश्रुतम्" इति प्रागुक्तप्रकारेण आत्मानमनुसंदधानस्तमनवाप्य नानावर्णान्नाडीमार्गान् अंतर्हृदये पश्यन् पृच्छति आभातीति । तद् ब्रह्मणो रूपं यो विद्वानत्र हृदये पश्यति स शुक्लादिरूपमिव अनवस्थितरूपं ब्रह्म पश्यति अतः कथंरूपं कीदृक्रूपं तदक्षरं व्यापकं अमृतमविनाशि परं तद् ब्रूहीति शेषः । काद्रवं कुत्सितः परपीडकः द्रवो गतिर्यस्य स काद्रवो धूमः तद्वर्णं काद्रवं कद्रुपिंगलं तद्वर्णं श्रूयन्ते च ब्रह्ममार्गे रूपाणि "तस्मिन् शुक्लमुत नील-

तत्कथंरूपं कीदृक्‌रूपमिति रूपप्रश्नः यत्र पश्यति
दिति अधिकरणप्रश्नश्च ॥ १९ ॥

एवं पृष्टः प्राह भगवान्—

सनत्सुजात उवाच—

नाभाति शुक्लमिव लोहितमिवाथो
कृष्णमथांजनं काद्रवं वा ॥
न पृथिव्यां तिष्ठति नांतरिक्षे
नैतत्समुद्रे सलिलं बिभर्त्ति ॥ २० ॥

नेति । नैतद्ब्रह्म शुक्लादिरूपत्वेनावभासते, रूपत्वाद् ब्रह्मणः । श्रूयते च—"ततो यदुत्तरतरं रूपमनामयम्" इति । "अशब्दमस्पर्शमरूपमव्यय इति च : तथा न पृथिव्यां तिष्ठति नांतरिक्षे । त श्रुतिः अन्यत्रानन्यस्थानं दर्शयति—"स भगवः कस्मि प्रतिष्ठितः इति स्वे महिम्नीति । कस्मात्पुनः कार

---

माहुः पिंगलं हरितं लोहितं च एष पंथा ब्रह्मणा ह्यनुवि नैति ब्रह्मवित्पुण्यकृत्तैजसश्च" इति ॥ १९ ॥

उत्तरमाह—नाभातीति । ब्रह्ममार्गे यद्यपि शुक्लादि भांति तथापि यद् ब्रह्मणो रूपं तद् पृथिव्यादिषु नास्ति शब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगंधवच्च यद्" इ शब्दादीनां निषेधाद् तेषां च शब्दादिमत्त्वात् रूपांतरा ब्रह्ममार्गोपलक्षितानि न तु ब्रह्मरूपाणि । तथाच श्रुतिः—"

पृथिव्यादिषु न तिष्ठति? तत्राह—नैतत्समुद्रे सलिलं पंचभूतात्मकं देहं बिभर्त्ति। सलिलशब्दो भूतपंचकोपलक्षणार्थः। यथा "आप एव ससर्जादौ तासु बीजमवासृजत्" इत्यत्रापि अप्शब्दो भूतपंचकोपलक्षणार्थः। श्रूयते च पंचाग्निविद्यायां "पंचम्यामाहुतावापः पुरुषवचसो भवंति" इति अपामेव पुरुषशब्दवाच्यत्वम्। एतदुक्तं भवति—यदि ब्रह्मणः संसारांतर्वर्त्तित्वं भवेत् तदा संसारानुप्रविष्टत्वात् घटादिवदीदृग्रूपादिमत्त्वमन्यस्मिंश्चावस्थानं भवेत्। इदं तु पुनरपूर्वादिलक्षणत्वात्संसाराननुप्रविष्टमेव ब्रह्म, तस्माद्रूपादिरहितमिति ॥ २० ॥

तर्हि न कस्य कुत्राप्युपलभ्यते इत्याह—

न तारकासु न च विद्युदाश्रितं
न चाभ्रेषु दृश्यते रूपमस्य।
न चापि वायौ न च देवतासु
नैतच्चंद्रे दृश्यते नोत सूर्ये ॥ २१ ॥

---

धूमार्कानिलाऽनलानां खद्योतविद्युत्स्फटिकशशीनाम्॥ एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे" इति समुद्रे संसारसागरे एनं परमात्मानं सलिलं सलिलोपलक्षितः पंचभूतात्मको देहः न बिभर्ति जीवानामिव ब्रह्मण उपाधिजं दुःखं नास्तीत्यर्थः। यद्वा सामुद्रे जले एतद्रूपं नास्तीत्यर्थः ॥ २० ॥

नैवर्क्षु नैतद्यजुःषु नाप्यथर्वसु
न दृश्यते वै विमलेषु सामसु ॥
रथंतरे बृहद्रथे वापि राजन्
महाव्रतस्यात्मनि दृश्यते तत् ॥ २२ ॥

"ज्ञानं च सत्यं च" इत्युपक्रम्य "महाव्रता ह्य ब्राह्मणस्य" इति ये गुणाः उक्तास्तत्संयुक्तस्यात्म दृश्यते तत्परं ब्रह्म न घटादिवदियत्तया सिध्यति अ त्वात्मन्येवात्मतया सिध्यतीत्यर्थः ॥ २१ ॥ २२ ॥

इदानीं तत्स्वरूपं तद्दर्शनं तत्फलं च श्लोक निर्दिशति—

अवारणीयं तमसः परस्तात्
तदन्ततोऽभ्येति विनाशकाले ॥

---

न तारकास्विति रूपादिराहित्यस्यैव प्रपंचः ॥ २१ ॥

नामरूपात्मके प्रपंचे सति तद्राहित्यं ब्रह्मणो वक्तुं प्रपंचादन्यत्वमुक्त्वा नामप्रपंचादप्यन्यत्वमाह—नैवर्क्षु इत्या तदित्यनेन अर्थात् ब्रह्मणो नाम निर्दिश्यते। विमलेषु वैश सामादिषु रथंतरबृहद्रथे च पृष्ठ्यसामनी। एतत् न दृश्यते

अवारणीयं अनतिक्रमणीयं अहेयत्वात् तमसः अज्ञान दुपाधेः परस्तात् पराचीनं तत् ब्रह्म अभ्येति गच्छति प्रल कालोपि तत्र लीयत इत्यर्थः। अणीय इति दुर्लक्ष्यम्। अ वहितेन ग्राह्यं, महच्च पर्वतेभ्य इति उपलक्षणं सर्वस्य सर्वस्म महदित्यर्थः ॥ २३ ॥

अणीयरूपं च तथाऽप्यणीयसां
महत्स्वरूपं त्वपि पर्वतेभ्यः ॥ २३ ॥
तदेतदन्हा संस्थितं भाति सर्वं
तदात्मवित्पश्यति ज्ञानयोगात् ॥
तस्मिन् जगत्सर्वमिदं प्रतिष्ठितं
य एतद्विदुरमृतास्ते भवंति ॥ २४ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैय्यासिक्यामुद्योगपर्वणि धृतराष्ट्रसनत्कुमारसंवादे श्रीसनत्सुजातीये तृतीयोऽध्यायः ॥ ३ ॥

आवरणीयमिति । यदिदं महाव्रतस्यात्मनि दृश्यते तदवारणीयं ब्रह्म सर्वगतत्वात् । तमसोऽज्ञानात् परस्तात् तद् ब्रह्म अंततोऽभ्येति प्रविशति विनाशकाले प्रलयकाले, जगदिति शेषः । तथा अणीयसामपि अणीयरूपं पर्वतेभ्योऽपि महत्स्वरूपम् । श्रूयते च "अणोरणीयान्महतो महीयान्" इति ॥

दृश्यन्ते च ये अणुत्वमहत्वादयो लोके तदेतत्सर्वं जगत् अह्नोरूपेण प्रकाशरूपेण ब्रह्मणि संस्थितं तदात्मत्वेनैवावभाति श्रूयते च—

तदेतदिति । तस्मिन्निदं जगत् प्रतिष्ठितं रज्ज्वामुरगवल्लीनं

"तस्य भासा सर्वमिदं विभाति" इति "येन सू
स्तपति तेजसेद्धः" इति च। तत् ब्रह्म आत्मवित्पश्य
ज्ञानयोगात् न कर्मयोगेन, तस्मिंश्चेत्र परमात्मनि ज
स्सर्वं प्रतिष्ठितं ये एतद्विदुरमृतास्ते भवंति ॥२३॥२

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविंदभगवत्पू
पादशिष्यश्रीशंकरभगवतः कृतौ सनत्सुजा-
तभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

---

तद्ये विदुस्ते अमृताः मुक्ता भवंति ॥ २४ ॥

इति उद्योगपर्वणि नैलकंठीये भारतभावदीपे
सनत्सुजातीये टीकायां तृतीयोऽध्यायः ॥ ३ ॥



## अथ चतुर्थोऽध्यायः ॥

"आवरणीयं तमसः परस्तात्" इत्यादिना ब्रह्मणो रूपं निर्द्धार्य्य "तदात्मवित्पश्यति ज्ञानयोगात्" इति ज्ञानयोगेनात्मदर्शनमुक्तम्। पुनरपि तस्य स्वरूपं दर्शयित्वा योगिनस्तद्रूपं पश्यंतीत्याह—

सनत्सुजात उवाच।

यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ॥
यद्वै देवा उपासते यस्मादर्को विराजते ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥ १ ॥

यत्तदिति। यद् ब्रह्मवित्पश्यति ज्ञानयोगात्, यज्ज्ञात्वा अमृता भवंति तच्छुक्रं शुद्धमविद्यादिदोषर-

---

पूर्वाध्यायांते ब्रह्मणो रूपं निर्दिश्य शून्यवदेव निर्धर्मकं शून्यभावस्यापि प्रकाशकं सद्रूपं ब्रह्म प्रत्यगभिन्नत्वेन ज्ञेयमस्तीत्यस्मिन्नर्थे मंत्रानुदाहरति। योगिप्रत्यक्षं च पुनः पुनः प्रमाणत्वेनोपन्यस्यति। यत्तच्छुक्रमित्यादिनाऽध्यायेन। यत्तच्छुक्रं बीजमिव बीजं विश्वोत्पत्त्यादिमूलकारणं सर्वचेष्टाप्रवर्तकं आनंदरूपं महत् वृत्तिरूपोपाधिशून्यं ज्योतिर्ज्ञप्तिमात्रं दीप्यमानं अर्कादिरूपेण महद्यशोनामकं यत् देवा इंद्रियाणि उपासंते अनुसरंति तस्मादेव मूलकारणात्सूर्यो जगत्प्रसवधर्मा मायोपाधिरीश्वरो विराजते। तथाच श्रुतयः 'आनन्दाद्ध्येव खल्विमानि भूतानि जायंते आनंदेन जातानि जीवंति आनन्दं प्रयंत्यभिसंविशंतीति। कोह्येवान्यात्कः प्राण्यात् यदेष आकाश आनंदो न स्यात्। येन

हितं महज्ज्योतिः सर्वावभासकत्वात्। श्रूयते च "तस्य भासा सर्वमिदं विभाति" इति। दीप्यमानं भ्राजमानं महद्यशः। श्रूयते च "तस्य नाम महद्यशः"। यद्वै ब्रह्म देवा इंद्रादयः उपासते। श्रूयते च "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति। यस्मात्परज्योतिषो ब्रह्मणः अर्कादिर्ज्योतिर्विराजते "येन सूर्यस्तपति तेजसेद्धः" इति श्रुतेः। एवंभूतं परमात्मानं सनातनं भगवंतं योगिन एव पश्यंति, न पुनर्ज्ञानयोगरहिताः॥ १॥

इदानीं परस्मादेव ब्रह्मणो हिरण्यगर्भाद्युत्पत्तिं दर्शयति—

शुक्राद् ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्द्धते॥
तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम्॥

---

सूर्यस्तपति तेजसेद्धः। न तस्येशे कश्चन तस्य नाम महद्यशः। प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवंति यस्मिन्नेतावुपाश्रितौ। प्राणस्य प्राणमुत चक्षुषश्चक्षुः" इत्यादि। तं परमात्मानं योगिनः चित्तवृत्तिनिरोधेन भगवन्तं सर्वैश्वर्यं संप्रज्ञाते, असंप्रज्ञाते तु सनातनं अखण्डैकरसं पश्यंतीति ज्ञेयम। योगेनैव तं परमात्मानं पश्येन्नान्यथा। यथाह दक्षः

स्वसंवेद्यं हि तद् ब्रह्म कुमारी स्त्रीसुखं यथा।
अयोगी नैव जानाति जात्यंधो हि यथा घटम्॥ इति॥

अस्यैव मंत्रस्य विवरणार्था उत्तरे मंत्राः। शुक्राद आनंद तं प्राप्येत्यर्थः। ब्रह्म जगतो बृंहकं परमव्योमाख्यं अव्याकृतं

योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥ २ ॥

शुक्रादिति । शुक्रात् शुद्धात् पूर्वोक्तात् ब्रह्मणो हिरण्यगर्भाख्यं ब्रह्म प्रभवति उत्पद्यते। अथोत्पन्नं ब्रह्म शुक्रेण वर्धते विराडात्मना । तत् शुक्रं शुद्धं ब्रह्म ज्योतिषामादित्यानां मध्ये तैरतसमप्रकाशितं सत् तपति स्वयमेव प्रकाशते, तेषामपि तापनं प्रकाशकम् । योऽन्यानवभास्यः सर्वावभासकः स्वयमेव भासते तं भगवंतं योगिन एव पश्यन्ति ॥ २ ॥

इदानीं पूर्णवाक्यार्थं कथयति—

पूर्णात्पूर्णमुद्धरंति पूर्णात्पूर्णं प्रचक्षते
हरंति पूर्णात्पूर्णं च पूर्णेनैवावशिष्यते ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥ ३ ॥
यथाकाशेऽवकाशोऽस्ति गंगायां वीचयो यथा ॥
तद्वच्चराचरं सर्वं ब्रह्मण्युत्पद्य लीयते ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥ ४ ॥

---

वाऽवस्तु सदापि चैतन्यप्रतिबिंबं प्राप्य प्रभवति जगज्जन्मादिकार्ये समर्थं भवति। तेनैव च वर्द्धते अतस्तच्छुक्लं ज्योतिषां सूर्यादीनां मध्येंऽतः स्थित्वा तपति प्रकाशते। तथाच गीतासु "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् इति। अतस्तं अन्येनाप्रकाशितं स्वयंज्योतिरित्यर्थः । तापनं सूर्यादीनामपि भयप्रदं "भीषाऽस्माद्वातः पवते भीषोदेति

पूर्णादिति । पूर्णाद्देशतः कालतो वस्तुतश्च अपरि-
च्छिन्नात् परमात्मनः पूर्णमेवोद्धरंति जीवरूपेण । यत्
र्णात्पूर्णमुद्धृतं जीवात्मना अतः पूर्णादेव समुद्धृ-
त्वात् इदमपि जीवस्वरूपं पूर्णमेव प्रचक्षते विद्वांसः
तथा हरंति पूर्णात् जीवात्मनाऽवस्थितात् पूर्णमात्म-
रूपमात्रं देहेन्द्रियाद्यनुप्रविष्टं देहेन्द्रियादिभ्यो निष्कृ
तत्साक्षिणं सर्वांतरं देहद्वयादुद्धरंतीत्यर्थः । तत
दुधृतेनैव मूलभूतेन पूर्णानंदेनावशिष्यते तेनैव पूर्णे
न ब्रह्मणा संयुज्यते । चित्सदानन्दाद्वितीयब्रह्मात्मनाऽ
शिष्यत इत्यर्थः । पूर्णमेवावशिष्यत इति वा पाठ
यदा देहेन्द्रियादिभ्यो निष्कृष्य तत्साक्षिणं सर्वांतरं दे
द्वयादुद्धरंति, तदा पूर्णमेवावशिष्यत इत्यर्थः । तथा

---

सूर्यः । भीषा ऽस्मादग्निश्चेंद्रश्च मृत्युर्धावति पंचमः" इति श्रुतेः
ईश्वरस्यापि जीवत्वे उपाधिसम्बन्ध एव कारणमित्यु
तत्र किं उपाधिभिः कृत्स्नं ब्रह्म उपाधीयते उत ब्रह्मणोऽं
वोपधीयंते । आद्ये जीवबहुत्वानुपपत्तिः । अंत्ये ब्रह्मणि निर
त्वानुपपत्तिः । अंशस्यांशित्वायोगाज्जीवेशयोरभेदानुपपत्ति
रित्याशंक्याह-पूर्णादिति । पूर्णात् व्यापकात् चिदाकाशात्
चित्प्रतिबिंबभूतं जीवरूपं उद्धरंति पृथक्कुर्वंति । प्राणादय उ
पाधिदर्पणाः । ननु उपाधीनां पृथक्सत्त्वे पूर्णस्य पूर्णत्वमेव
हन्येत इत्याशंक्याह-पूर्णादिति । पूर्णात्पूर्णं प्रचक्षते । अयं
घटाकाशन्यायेनोपाध्युपाधेययोः परस्परपरिच्छेदकत्वेऽन्यत

श्रुतिः—"पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" । अस्यायमर्थः—पूर्णमदस्तच्छब्दवाच्यं जगत्कारणं ब्रह्म। पूर्णमिदं त्वंशब्दनिर्दिष्टं प्रत्यगात्मस्वरूपम्। कथमनयोस्तत्त्वंपदार्थयोः पूर्णत्वमिति चेत्, तत्राह- पूर्णादनवच्छिन्नात्पूर्णमेव उदच्यते जीवेश्वररूपेण यस्मात्तस्मादनयोः पूर्णत्वमित्यर्थः । पूर्णस्य तत्त्वात्मनाऽवस्थितस्य पूर्णं रूपमादाय तत्त्वंपदार्थयोः शोधनं कृत्वा शोधितपदार्थः सन्नित्यर्थः। पूर्णमेव ब्रह्म अवशिष्यते ब्रह्मैव भवतीत्यर्थः । यः पूर्णस्वरूपस्तं परमात्मानं योगिन एव पश्यंति ॥ ३ ॥

---

अपि पूर्णत्वं न युज्यतेऽत उपाधिरप्यध्यस्त एव। तथाचाधिष्ठानाध्यस्तयोर्विषमसत्ताकत्वान्न परस्परपरिच्छेदकत्वं किंत्वितरेतरतिरोधायकत्वमेवास्तीति स्वस्वप्रतीतिकाले द्वयोरपि पूर्णत्वं, प्रतियोगिनस्तदानीमदर्शनात्। कल्पित उपाधिर्जीवेश्वरभेदे हेतुरित्यर्थः। यदा तु पूर्णानि प्राणादीनि ब्रह्मण्यध्यस्तानि ततः सकाशात् हरंति सम्यगवेक्षणेन दूरीकुर्वंति रज्जुत इव सर्पं तदा जीवेशभेदनिमित्तस्योपाधेरभावात् पूर्णं ब्रह्मैवावशिष्यते । यथोक्तं विष्णुपुराणे "विभेदजनकेऽज्ञाने नाशमात्यंतिकं गते ॥ आत्मनो ब्रह्मणा भेदमसंतं कः करिष्यति" इति । एवं च अंशांशित्वरूपेण जीवेशयोर्भेदानुपगमादनुपचरितस्तयोरभेदप्रतिपादकस्तत्त्वमस्यहं ब्रह्मास्म्ययमात्मा ब्रह्मेत्यादिरागम इति सिद्धम् । यत्पूर्णं शिष्यते तं भगवंतं योगिनः पश्यंति ॥ ३ ॥

स्पष्टोऽर्थः श्लोकः ॥ ४ ॥

इदानीं द्वा सुपर्णाविति मंत्रार्थं कथयति—

आपोऽथाद्भ्यः सलिलं तस्य मध्ये
उभौ देवौ शिश्रियातेऽन्तरिक्षे ॥
आदध्रीचीः सविषूचीर्वसाना-
वुभौ बिभर्ति पृथिवीं दिवं च ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥ ५

आप इति । अस्मात्परमात्मनः आपः प्र
सृष्टाः । तथाचाह मनुः—"आप एव ससर्जादौ" इ
भूतपंचकोपलक्षणार्थोऽवूशब्दः । अनेन सूक्ष्मसृष्टि
हिता । अथानंतरं अद्भ्यः पूर्वमेव सृष्टाभ्यः स
भूतपंचकात्मकं स्थूलदेहादिकं सृष्टम् ।
सलिलस्य देहात्मनाऽवस्थितस्य मध्येंऽतरिक्षे हृदया
उभौ जीवपरमात्मानौ देवौ द्योतनस्वभावौ शिश्रि
वर्तेते । न केवलमंतरिक्षे शिश्रियाते । आदध्रीचीः स
षूचीर्वसानौ । आभिमुख्येन ध्रियमाणाः अवस्थि

---

स्पष्टोऽर्थः श्लोकः ॥ ४ ॥

आप इति सलिलस्य सलिलमिव सलिलं एकरसं ब्रह्म
ल एको द्रष्टाऽद्वैतो भवतीति श्रुतिप्रसिद्धं, तस्य मध्ये
भ्योऽद्भ्यः अबुपलक्षितेभ्यः पंचमहाभूतेभ्यः सकाशादु
आपः पांचभौतिकं देहं अंतरिक्षे हृदयाकाशे शिश्रियाते अ

ताः अंचंतीत्यादध्रीच्यो दिशः, विषूच्यः उपदिशो विष्वग्गमनात्, ताभिः सह वर्तत इति सविषूच्यः प्राच्याद्याः सर्वा दिशः वसानौ आच्छादयंतौ उभौ बिभर्ति पृथिवीं दिवं च। एको जीवः आत्मनः स्वाभाविकचित्सदानंदाद्वितीयब्रह्मात्मत्वमनवगम्य अनात्मनि देहादौ आत्मभावमापन्नः पृथिवीं भूतभौतिकलक्षणं कर्मफलानुरूपं सुखदुःखात्मकं देहादिकं बिभर्ति। अपरो दिवं द्योतनात्मकं स्वात्मरूपं बिभर्ति। श्रूयते च—द्वा सुपर्णाविति। यः स्वात्ममायया स्वात्मानं प्राणाद्यनंतरं कृत्वांतरमनुप्रविश्य अभिपश्यन्नास्ते तं भगवंतं योगिन एव पश्यंति ॥ १ ॥

---

कौ उभौ देवौ चिद्रूपत्वेन द्योतमानौ जीवेश्वरौ सुप्तिप्रलययोः क्रमेण तंद्रावंतौ ताभ्यामन्यः अतंद्रितः निर्मायः सवितुः जगत्कारणस्य विवस्वान् वस आच्छादने वस्वान् आच्छादनवान् तद्विपरीतो विवस्वान् अपरिच्छिन्नसंविद्रूपः संततमनुदितानस्तमितप्रकाशः सर्वाधिष्ठानभूतः उभौ जीवेश्वरौ पृथिवीं दिवं च बिभर्ति। आसध्रीचीः सविषूचीर्वसानाविति पाठे सः शुक्रसंज्ञः शुद्ध आत्मा कीदृशौ उभौ देवौ सध्रीचीः विषूचीश्च आवसानौ दिशः उपदिशश्च पटवद्वसानौ दिगंतपर्यंतं विस्तीर्णाविसर्थः। व्यवहिताश्चेति छांदसं क्रियोपसर्गयोर्व्यवधानं। शेषं माध्वदेव ॥ ८ ॥

इदानीं ज्ञानिनः स्वात्मावस्थानं दर्शयति—

चक्रे रथस्य तिष्ठंतं ध्रुवस्याव्ययकर्मणः ॥
केतुमंतं वहंत्यश्वास्तं दिव्यमजरं दिवि ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥ ६

चक्र इति । ध्रुवस्याव्ययकर्मणः परमेश्वरस्य ई- श्वरात्मनाऽवस्थितस्य, रथस्य शरीरस्य त्रैलोक्यात्मना- वस्थितस्य चक्रे चंक्रमणात्मके देहे तिष्ठंतं केतुमंतं प्र- वंतम् अत एव दिव्यम् अप्राकृतं अजरं जरामरणादि- विवर्जितम्, दिवि द्योतनात्मके अनुदितानस्तमितज्ञाना- त्मनाऽवस्थिते पूर्णानंदे ब्रह्मणि वहंत्यश्वाः इंद्रियाणि एतदुक्तं भवति—यद्यपींद्रियाणि स्वभावतो विषयेषु वर्त्तंते, तथापि विज्ञानसारथिना समाकृष्यमाणा- केतुमंतं पुरुषं दिवि वहंति न पराग्विषय इति । तदुक्तं कठवल्लिषु—"आत्मानं रथिनं विद्धि शरीरं रथ- तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इं-

चक्रे इति । रथस्य शरीरस्य, रथःस्पंदनदेहयोरिति वि- अध्रुवस्य विनाशिनोऽपि अव्ययं अविनाशि कर्म यस्य तस्य व्ययकर्मणः चक्रे चक्रवच्चालके प्राक्कर्मणि निमित्ते सति वि- कर्माधीना इत्यर्थः । अश्वाः इंद्रियाणि शरीररथं विषयदेशं नयंतः केतुमंतं प्रज्ञावंतं जीवं । किज्ञानेऽस्माच्चुन् । तं परमा- प्रतिवहंति वहतीर्द्धिकर्मा वश्यैरिंद्रियाश्वैर्देहरथे योजितैः जीवः

याणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेंद्रियमनो-युक्तं भोक्तेत्याहुर्मनीषिणः" इत्यादिना । यत्र परमात्मनि वहंति तं भगवंतं योगिन एव पश्यंति ॥ ६ ॥

नानेन सदृशं किंचिद्विद्यत इत्याह—

न सादृश्ये तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ॥
मनीषयाऽथो मनसा हृदा च
य एनं विदुरमृतास्ते भवंति ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥७॥

न सादृश्य इति । अस्य परमात्मनो रूपं न सादृश्ये तिष्ठति नान्येन सादृश्ये वर्त्तते नानेन सदृशं किंचिद्विद्यते इत्यर्थः । श्रूयते च "न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः" इति । अत एवोपमाद्यविषयत्वम् । तथा च न चक्षुषा पश्यति कश्चिदप्येनं सर्वांतरं परमात्मानम् । कथं तर्हि पश्यति ? मनीषया अध्यवसा-

---

मात्मतां नीयते अन्यथा शरीरे नष्टेपि तत्कृतं कर्म न क्षीयतेऽतः शरीरांतरेण सद्य एव बद्ध्यते। दिव्यं अलौकिकं अहंप्रत्ययावि-षयादन्यमशनायाद्यतीतमित्यर्थः । अजरमिति सर्वविकारप्र-तिषेधः । दिवि हार्दाकाशे ॥ ६ ॥

अस्य रूपं आकृतिः सादृश्ये न तिष्ठति । अनुपमस्वरूपमि-त्यर्थः । न चक्षुषेति सर्वेन्द्रियगोचरत्वं निषिध्यते अशब्दमस्पर्शम-

यात्मिकया बुद्ध्या । मनसा संकल्पविकल्पात्मकेन हृदा च हृदयेन च साधनभूतेन । हृदयं विना नान्य परमात्मन उपलब्धिः संभवतीति मत्वा हृदा चेत्युक्तम् अथवा न केवलं मनोबुद्धिमात्रेण अपि च हृदा हृ यस्थेन च परमेश्वरेणानुगृहीताः संतो य एनं परमात्म विदुः अयमहमस्मीति ते अमृता अमरधर्माणो भवंति अथवा हृदा हृदयेन परमात्मना । तथा च हृत परमात्मनि हृदयशब्दं निर्वक्ति "स वा एष आत हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृ मिति अहरहर्वा एवंवित्स्वर्गलोकमेति" इति तथा तदधीनामात्मसिद्धिं दर्शयति श्रुतिः—यस्य देवे इति एवं यं विदित्वा अमृता भवंति तं योगिन एव पश्यंति।

इदानीमिंद्रियाणा विषयेषु प्रवृत्तिरनर्थायेत्याह—

द्वादश पूगाः सरितो देवरक्षिताः मध्वीशते ।
तदनुविधायिनस्तदा संचरंति घोरम् ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥८॥

---

रूपमव्ययमिति रूपादिहीनत्वश्रुतेः । मनीषया मनसा वि मनसा सूक्ष्मेण मनसैवानुद्रष्टव्यमिति तस्य कारणत्वश्रु हृदा हृदुपलक्षिते देशे निगृहीतेन मनसा य एनं विदुः ते अ ताः मुक्ता भवंति ॥ ७ ॥

द्वादशेति। ये द्वादश पूगाः कर्मज्ञानेंद्रियाणि, एकादशं मनः, द्वादशी बुद्धिः, तेषामनेकपुरुषापेक्षयैकैकस्य पूगत्वमुच्यते । सरितः सरणशीलाः । देवरक्षिताः देवेन परमात्मना रक्षिताः । मधुव्रत विषयं मधु ईशते नियमयंति, असांकर्येण स्वं स्वं विषयमनुभवंतीत्यर्थः। यदैवमनुभवंति तदा तदनुविधायिनो विषयपराः संचरंति घोरं संसारम्। तस्मादिंद्रियाणि विषयेभ्यः उपसंहृत्य स्वात्मन्येव वशं नयेदित्यर्थः । येन रक्षिता मध्वीशते तं देवं योगिन एव पश्यंति ॥ ८ ॥

---

तदवेदने संसारानुच्छेदमाह–द्वादशेति । द्वादशसंख्याः पूगाः समुदाया यस्यां तां द्वादशपूगां ते च–"चित्तादिपूगः, स्मरणादिपूगः, श्रोत्रादिपूगः, श्रवणादिपूगः । वागादिपूगो वचनादिपूगः शब्दादिपूगो वियदादिपूगः ॥ १ ॥ प्राणादिपूगः श्वसनादिपूगः संस्कारपूगः सुकृतादिपूगः । एतैर्महापुगवरैरविद्या नद्यामधश्चोपरि चैति जीवः" ॥२॥ तादृशीं नित्यप्रवाहवतीं सरितमविद्याख्यां पिबंतस्तत्कृतैरिष्टैः पुत्रपश्वादिभिर्लब्धैस्तृप्यंतः देवैश्चक्षुरादीनामनुग्राहकैः सूर्यादिभिस्तत्तद्विषयदर्शनद्वाराऽनेकसंस्कारसंततिं संतन्वानैः । रक्षितां देवरक्षितां ते जीवाः तस्या अविद्यानद्याः मधु पुत्रपश्वादिकं मधुरं फलं ईक्षंतः पश्यंतस्तल्लिप्सया घोरं महाभयंकरं संचरंति ऊर्ध्वाधोमार्गेषु पुनः पुनरावर्तंते इत्यर्थः । इह यत्राधिष्ठाने संचरंति तं परमेश्वरं योगिनः पश्यन्ति ॥ ८ ॥

किंच दृष्टांतदार्ष्टांतिकयोस्तत्राभिधानम्—

तदर्द्धमासं पिबति संचितं भ्रमरो मधु ॥
ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥५॥

तदर्द्धेति । यथा मधुकरो भ्रमरोऽर्द्धमासोपा[र्जि]तं मधु अर्धमासं पिबति, एवमसावपि भ्रमरः भ्र[मण]विषयत्वात्संसारी तद्विषयं मधु अर्द्धमाससंचितमर्द्ध[मासं] पिबति । पूर्वजन्मसंचितं कर्म अन्यस्मिन् ज[न्मनि] भुंक्ते इति यावत् । भवेदप्यैहिकफलात्कर्मणः फ[ल]सिद्धिः कर्मानंतरभावित्वात्; कथं पुनरामुष्मिकफला[त्]

---

ननु इह कृतस्य कर्मणः कृत्स्नस्य अमुत्रैव भोगात् कर्मा[]भावे कुतः पुनरावृत्तिः, किंतु मुक्तिरेव भवतीत्याशंक्या[ह]र्धेति । तन्मधु कर्मफलं अर्धमासं अर्धमासश्चन्द्रो यस्मिन् भोग[्य]तत् अर्धमासं भवति । तथाहि—तेषां सोमो राजान्नं त[द्देवा] भक्षयंतीति श्रुत्याऽमुत्र गत्वा देवभावं प्राप्ता इष्टादिकारिण[ः] [सो]मस्यममृतं पिबंतीति दर्शितम् । तथाच भ्रमरो जीवः इ[तस्ततो] भ्रमणशीलः अमुत्र सोमरूपमर्धं कर्मफलं भुंक्ते शेषेणात्र[] इत्यर्थः । संचितमित्यनेन आमुष्मिकफलभोगानंतरं ऐहि[क]भोगवासनाऽप्यस्तीति सूचितं । द्विविधं हि कर्म किंचिदामु[ष्मिक]फलं किंचिदैहिकफलं तत्रैकं भुक्त्वा इतरार्थमत्रावतरतीति [] श्रुतिश्च यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तंते तद्य इ[ह रम]णीयचरणा अभ्याशो ह ते रमणीयां योनिमापद्यंते कपूय[]

र्मणः फलसिद्धिः, कर्मणो विनाशित्वादित्याशंक्याह—ईशान इति। भवेदयं दोषः यदि केवलात्कर्मणः फलसिद्धिः स्यात् ईशानः परमेश्वरः कृतप्रयत्नापेक्षः सन् सर्वेषु प्राणिषु प्राणाग्निहोत्रस्येतरस्य च तत्कर्मानुसारेण हविर्भूतमन्नादिकमकल्पयत् । यः ईशानः सर्वभूतेषु हविर्भूतमकल्पयत्तं योगिन एव पश्यंति ॥ ९ ॥

किंच, किमेते मध्वाशिनो बंभ्रम्यमाणाः परिवर्तंत एव सर्वदा, किंवा ज्ञानं लब्ध्वा मुक्ता भवंतीत्याशंक्याह—

हिरण्यपर्णमश्वत्थमभिपत्य ह्यपक्षकाः ॥
तत्रैव पक्षिणो भूत्वा प्रपतंति यथासुखम् ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥१०॥

हिरण्यपर्णमिति । ये अपक्षकाः ज्ञानपक्षरहिताः

---

कपूयां योनिमापद्यंत इत्याह। संपातः कर्म चरणं कर्मशेषः अभ्याशो ह शीघ्रमेवेति श्रुतिपदानामर्थः। य एवंविधो जीवः स एव ईशानः अंतर्यामी सर्वभूतेषु तिष्ठति स एव च हविर्भूतं हविर्भिः सिद्धं यज्ञं च कल्पितवान् वेदस्य वैदिकमार्गस्य च प्रवर्तक इत्यर्थः। एतेन त्वंपदार्थस्य तत्पदार्थाभेद उक्तः। यो यज्ञं अकल्पयत् तं योगिनः पश्यंति ॥ ९ ॥

ननु ईश्वरस्य जीवभावे किं कारणमत आह—हिरण्येति। हिरण्यानि हरणशीलानि आपातरमणीयत्वात् पर्णानीव अवयवाः स्त्रीपुत्रादयो यस्य तं हिरण्यपर्णं अश्वत्थं न श्वोऽपि तिष्ठतीत्यश्वत्थो नश्वरः अविद्यावृक्षः समभिपद्य प्राप्य अपक्षकाः न संति

मध्वाशिनः परिवर्त्तंते, ते हिरण्यपर्णमश्वत्थं च रमणीयं चेति हिरण्यं हितं रमणीयं च यस्याश्वत्थस्य। तथाचाह भगवान्वासुदेवः—"छंदांसि पर्णानि" इति। हिरण्यपर्णमश्वत्थमभिपत्य आरुह्य संयोगिब्राह्मणादिदेहं प्राप्येत्यर्थः। तत्रैव ब्राह्मणाः पक्षिणो ज्ञानिनो भूत्वा। तथा च ब्राह्मणम्—"ये विद्वांसस्ते पक्षिणो ये अविद्वांसस्ते अपक्षाः" प्रपतंति यथासुखम् प्रयत्नं कृत्वा मुक्ता भवंतीत्यर्थः यं ज्ञात्वा प्रपतंति तं योगिन एव पश्यंति ॥ १०

इदानीं योगं दर्शयति—

अपानं गिरति प्राणः प्राणं गिरति चंद्रमाः।
आदित्यो गिरते चंद्रमादित्यं गिरते परः ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥

अपानमिति। अपानं गिरति उपसंहरति प्राणः

---

पक्षाः उत्क्रमणहेतव उपाधयः प्राणरूपा येषां ते विद्वांसः तत्र अविद्यायां पक्षिणो भूत्वा प्राणाद्युपाधिप्राप्त्या ... योग्या भूत्वा यथासुखं यथावासनं प्रपतंति तासु तासु ... निपतन्तीत्यर्थात्। बहुवचनं औपाधिकरूपभेदापेक्षया। श्रूयते ... णोपाधिकमुत्क्रमणं चिदात्मनः प्रश्नोपनिषदि षोडशकलं प्रस्तुत्य स ईक्षां चक्रे कस्मिन्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठास्यामीति स प्राणमसृजतेति ॥ १० ॥

प्राणं गिरति चंद्रमाः मनः उपसंहरति। मनसश्चंद्रमा अधिदैवतं, तस्मात् चंद्रशब्देन मन उच्यते। तं चंद्रं मन आदित्यो बुद्धिर्गिरते, बुद्धेश्चाधिदैवतमादित्यः। तमादित्यं बुद्धिं गिरते परः ब्रह्म। एतदुक्तं भवति समाधिवेलायामपानं प्राणे उपसंहृत्य प्राणं मनसि मनश्च बुद्धौ बुद्धिं परमात्मनि उपसंहृत्य स्वाभाविकचित्सदानंदाद्वितीयब्रह्मात्मनैवावतिष्ठत इत्यर्थः ॥११॥

इदानीं परस्य जीवात्मनाऽवस्थानं दर्शयति—

एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ॥
तं चेत्सततमुत्क्षिपेन्न मृत्युर्नामृतं भवेत् ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥ १२॥

एकमिति। हंति अविद्यां तत्कार्यं चेति हंसः

---

इदानीं तद्दर्शनाभ्युपायं योगं संक्षेपेणाह—अपानमिति। गिरति उपसंहरति स्वात्मनि योगशास्त्रोक्तरीत्या "पार्ष्णिना गुदमापीड्य दंतैर्दंतानसंस्पृशन् ॥ इडामनोऽपानवायुमुन्नयेच्च शनैः शनैः॥१॥ तं प्राणेनैकतां नीत्वा स्थिरं कृत्वा हृदंबरे। चेतोमात्रेण निष्ठेत तच्च बुद्धौ विलापयेत्" ॥२॥ चंद्रमा अत्र मनः, आदित्यो बुद्धिः, परः परमात्मा, एवं य आदित्यं गिरति तं योगिनः पश्यंति ॥ ११ ॥

ननु नित्यापरोक्षं ब्रह्म यत्साक्षादपरोक्षादिति श्रुतेः। अतः किं योगेनेत्याशंक्याह—एकमिति। हंस इव हंसः परमात्मा शरीरवृक्षमारूढोऽपि तेन असंबद्धः स चतुष्पात् सोऽयमात्मा चतुष्पादि-

परमात्मा भूतभौतिकलक्षणात्संसारात् सलिलात्
च्चरन् ऊर्ध्वं चरन् संसाराद् बहिरेव वर्त्तमानः
जीवाख्यं पादं नोत्क्षिपति नोद्धरति नोपसंह
रूपंरूपं प्रतिरूपोऽवतिष्ठत इत्यर्थः । श्रूयते क
ल्लीषु—"एकस्तथा सर्वभूतांतरात्मा" इति। कस्मात्
पादं नोत्क्षिपति इत्यत्राह—तं जीवाख्यं पादं
सततयायिनं यद्युत्क्षिपेत् स्वमायया स्वमात्मानं प्रा
नंतभेदं कृत्वा तेष्वप्रविश्य जीवात्मना यदि
तिष्ठेत्, तदा न मृत्युर्जननमरणादिलक्षणः सं
भवेत्, संसारिणो जीवस्याभावात्। तथा अमृतम
मोक्षो न भवेत्, अननुप्रविष्टस्य दर्शनासंभव
तथाच तदर्थमेवानुप्रवेशं दर्शयति—रूपंरूपमि
तथाचाथर्वणी श्रुतिः—"एकं पादं नोत्क्षिपति सलि
उच्चरन्। स चेदुत्क्षिपेत्पादं न मृत्युर्नामृतं भवेत्"इ

ति श्रुतेः। चतुर्णां पादानां जाग्रत्स्वप्नसुषुप्ततुरीयाख्या
एकं पादं तुरीयं नोत्क्षिपति न प्रकाशयति। कीदृशः
निर्विशेषात् अतिगंभीरात् उच्चरन् उपर्येव पादत्रयेण
तुरीयं पादं शिवमद्वैतं चतुर्थं मन्यंते स आत्मा स वि
श्रुतिप्रसिद्धं ऊर्ध्वाय उपरितनाय पादत्रयाय विश्वतैज
रूपाय तेषां चालनायेत्यर्थः। संततं व्याप्तं, तुरीयं त्रिषु
त्युक्तः। नाहि चैतन्यानुबंधं विना विश्वादयः स्वकार्ये

"एकं रूपं बहुधा यः करोति" इति च। यः पादरूपेण जीवात्मना त्रिपादरूपेण सच्चिदानंदाद्वितीयब्रह्मात्मनाऽवस्थितस्तं परमात्मानं योगिन एव पश्यंति ॥ १२ ॥

केन तर्ह्युपाधिना परः पादात्मना अवतिष्ठत इत्याशंक्य परस्यैव लिंगोपाधिकं जीवात्मानं दर्शयति—

अंगुष्ठमात्रः पुरुषोंऽतरात्मा
लिंगस्य योगेन संयाति नित्यम् ॥
तमीशमीड्यमनुकल्पमाद्यं
पश्यंति मूढा न विराजमानम् ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥१३॥

अंगुष्ठमात्र इति। स एव सच्चिदानंदाद्वितीयः अंतरात्मा सर्वभूतांतरात्मा पुरुषः पूर्णः परमात्मा लिंगयोगेन अंगुष्ठमात्रपरिमाणपरिच्छिन्नः संयाति संसरति नित्यम्। कस्मात्पुनः कारणात् लिंगयोगेनांगुष्ठमात्रः

---

तं चेद् पश्यति तदा मृत्युरमृतं च अज्ञानकृतं द्वयं सति ज्ञाने कालत्रयेऽपि नास्तीत्यर्थः। यद्यपि नित्यापरोक्षं ब्रह्म तथापि उपाधिविशिष्टेनैव रूपेण परोक्षं ननु ततो निष्कृष्टरूपेणातस्तदापरोक्ष्याय योगोऽपेक्षित इत्यर्थः। सततमृत्विजामिति पाठे क्वचिन्नत्र पादत्रयक्रियानिमित्तमित्यर्थः ॥ १२ ॥

अंगुष्ठेति। अंगुष्ठमात्रे हृदये प्रतिष्ठितत्वादंगुष्ठमात्रः। एतेन हृदयपुंडरीकं ध्यानस्थलमुपदिष्टं भवति। पुरुषः पूर्णः अंतरात्मा

संसरंति? तत्राह—यो लिंगस्य योगेनांगुष्ठमात्रः संसरति तमीशं सर्वस्येशितारम् ईड्यं स्तुत्यम् अनुकल्पं सर्वमनु प्रविश्यात्मना अनुकल्पयतीत्यनुकल्पम् आद्यम् आदिभवं विराजमानं यस्मान्मूढा अविवेकिनः देहद्वयात्माभिमानिनो न पश्यंति तस्मादात्मनो ब्रह्मभावानवगमात्संसरंति । यमात्मानम् अपश्यंतः संसरंति तं योगिन एव पश्यंति ॥ १३ ॥

इदानीमिंद्रियाणां विषयाणां चानर्थहेतुत्वं दर्शयति—

गूहंति सर्पा इव गव्हरेषु
क्षयं नीत्वा स्वेन वृत्तेन मर्त्यान् ॥
ते विप्रमुह्यंति जना विमूढा—
स्तैर्दत्ता भोगा मोहयंते भवाय ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥१४

गूहंतीति । यथा सर्पा गव्हरेभ्यो निष्क्रम्य स्वं

---

बाह्यात्मभ्योऽन्नमयादिभ्यः पंचभ्य आंतरः लिंगस्य पंचप्राणमनोबुद्धिदशेंद्रियात्मकस्य लिंगशरीरस्य संबंधेन नित्यं संयाति लोकपरलोकौ जाग्रत्स्वप्नौ वा गच्छति तं ईशं यमयितारं ईड्यं स्तुत्यं अनुकल्पं उपाधिमनु सर्वकार्येषु समर्थं आद्यं मूलकारणं विराजमानं प्रत्यक्चैतन्यरूपेण प्रकाशमानमपि मूढाः न पश्यंति तं योगिनः पश्यंति ॥ १३ ॥

संन्यासं कृत्वाऽपि वंचकानां संगतिर्न कर्तव्येत्याह—गूहंति

वृत्तेन विषप्रदानेन मर्त्यान् क्षयं नीत्वा गव्हरेषु गूहंति स्वात्मानं प्रच्छादयंति; एवम् इंद्रियसर्पाः श्रोत्रादिषु शयानाः श्रोत्रादिभ्यो निर्गत्य स्वेन वृत्तेन विषयप्रदानेन मर्त्यान् क्षयं नीत्वा गव्हरेषु गूहंति स्वमात्मानं प्रच्छादयंति, ते विप्रमुह्यंति विषयविषाभिभूता विशेषेण मुह्यंति तद्व्यतिरिक्तं न किंचिज्जानंतीत्यर्थः। तथाच श्रुतिः— "यथा प्रियया संपरिष्वक्तः" इति। तैरिंद्रियैर्दत्ताः विषकल्पा भोगाः विषयाः मर्त्यान्मोहयंते, पुनः पुनर्मोहहेतवो भवंति। यदिदं विषयैर्विमोहनं तद् भवाय गर्भजन्मजरामरणसंसाराय भवति। यमीड्यमनुकल्पमाद्यम् अदृष्ट्वा विषयविषांधा मुह्यंति तं योगिन एव पश्यंति॥१४॥

संमतिमाह—

नात्मानमात्मस्थमवैति मूढः
संसारकूपे परिवर्तते यः॥
त्यक्त्वाऽऽत्मरूपं विषयांश्च भुंक्ते
स वै जनो गर्दभ एव साक्षात्॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम्॥१५॥

नात्मानमिति। मूढः आत्मानात्मविवेकशून्यः

---

यथा सर्पाः खलाः परमुद्वेजयंतोऽपि बिलादौ निलीय आत्मानं गूहंति तद्वत् तेषु बाह्यतो रमणीयेषु तेषां समीपे विमूढाः जनाः

पुमान् आत्मस्थं आत्मनि तिष्ठंतं न जानाति स एवाहमिति, अतः कारणात् संसारकूपे संसार एव कूपस्तस्मिन्परिवर्तते श्वशूकरादियोनिं प्राप्नोति, अपरोक्षात्मचैतन्यं देहादिदोषरहितं सर्वावभासकम् येन सूर्यस्तपति स एव तत्स्वरूपं परित्यज्यानित्यान्विषयान् भोगान् भुंक्ते, स जनो न, तर्हि किं? साक्षाद्गर्दभ एव । एवंविधं पूर्वोक्तमात्मानं योगिन एव पश्यंति ॥ १५ ॥

ज्ञानिनां मोक्षस्वरूपमाह—

असाधना वाऽपि ससाधना वा
समानमेतत् दृश्यते मानुषेषु ॥
समानमेतदमृतस्येतरस्य
युक्तास्तत्र मध्व उत्सं समापुः ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥१६॥

असाधना वेति । ये असाधनाः शमदमादिसाधन

---

मुह्यंति अतः सम्यक्परीक्षितैः सहैव संगतिर्यच्छाभाय कर्तव्या योगिनः पश्यंति ॥ १४ ॥ १५ ॥

नन्वंगुष्ठमात्रस्य हृदये स्थितस्य हृदयतापेन तापप्राप्तिः स्यात्तथा च तापस्वभावस्य कुतो मुक्तिरित्याशंक्य तस्य कदाचिदपि तापो नास्तीत्याह—असाधना इति । मानुषेषु संघाताभिमानिषु केचिदसाधनाः शमादिहीनाः । केचित्ससाधनास्तद्युक्ता भवंतु तत्स्थं एतद्ब्रह्म समानं निर्विकारं असंगो ह्ययं पुरुष इत

राहिताः, ये च शमदमादिसाधनयुक्ताः ससाधनाः, तेषु समानं साधारणमात्मस्वरूपं दृश्यते मानुषेषु । तथा समानममृतस्य मोक्षस्य इतरस्य संसारस्य सति चासति च तेषां मध्ये ये युक्ताः शमदमादिसाधनयुक्ताः, ते तस्मिन् विष्णोः परमे पदे मध्वः मधुनः उत्सं समापुः पूर्णानंदं ब्रह्म प्राप्नुवंतीत्यर्थः । यमुत्सं संपूर्णानंदं युक्ताः प्राप्नुवंति तं योगिन एव पश्यंति ॥ १६ ॥

किंच—

उभौ लोकौ विद्यया व्याप्य याति
तदाहुतं चाहुतमग्निहोत्रम् ॥
मा ते ब्राह्मी लघुतामादधीत
प्रज्ञानं स्यान्नाम धीरा लभंते ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥१७॥

---

संगत्वश्रुतेः । एवं मुक्तबद्धयोरपीत्याह-समानमिति । कस्तर्हि मुक्तेषु विशेष इत्यत आह-मुक्ता इति । तत्र तेषु मध्ये मुक्ता मध्वः मधुनः ब्रह्मरसस्य उत्सं उत्कर्षं परां काष्ठां समापुः संप्राप्ताः । अयंभावः-अवस्थांतरगतस्य दुःखस्यावस्थांतरेऽदर्शनादुपाधिधर्म एव दुःखं भ्रांत्या उपहितेऽपि भाति स्फटिके इव जपाकुसुमलौहित्यं सर्वात्मना उपाधित्यागात्तु मुक्तानां न दुःखस्पर्शोऽस्तीति ते निरतिशयानंदभाज इति । य एवं समानस्तं योगिनः पश्यंति ॥ १६ ॥

उभाविति । उभौ लोकौ इहपरौ विद्यया ब्रह्मा-
त्मत्वविषयया व्याप्य याति तत्पूर्णानंदं ब्रह्म । यस्मा-
दुभौ लोकौ विद्यया व्याप्य याति, तस्मादहुतं चाग्नि-
होत्रम् अनेनात्मज्ञानेनाभिमुख्येन हुतं भवति । सर्वमग्नि-
होत्रादिकं कर्मफलं चानेनैव संपादितं भवतीत्यर्थः
यस्मादुभौ लोकौ विद्यया व्याप्य याति यस्मादना-
हुतमग्निहोत्रं हुतं भवति, तस्मान्मा ते तव ब्राह्मी
ब्रह्मविषया विद्या लघुतां मर्त्यभावं कर्मवदादधीत
करोतु, अपितु प्रज्ञानं तमसः परं परमात्मानं आत्मत्वे

---

एवं ब्रह्मप्राप्तौ सर्वफलावाप्तिं कृतकृत्यतां चाह-उभाविति
उभौ लोकौ आत्मलोकं अनात्मलोकं च विद्यया ब्रह्माकार
अंतःकरणवृत्त्या अहमेवेदं सर्वोस्मीति सार्वात्म्याकारया च ह
व्याप्य प्रकाश्य ज्ञात्वा याति प्रारब्धकर्मावष्टब्धदेहः सन्
चरति विद्वान् यदैवं तदा अहुतमप्यग्निहोत्रं अस्य हुतमेव भ
ज्ञाने सर्वाणि कर्मफलान्यंतर्भवंतीत्यर्थः । अतः ब्राह्मी वाक्
अहंमहानस्मीति वदतः लघुतां नीचत्वं मा आदधीत मा करोतु
दासोऽस्मीति मा ब्रूहीत्यर्थः। तं चेद् ब्रूयुरतिवाद्यसीत्यतिवाद्य
ति ब्रूयान्नापह्नुवीतेति श्रुत्यैव ब्रह्मविदामतिवादित्वदोषो ना
ति प्रदर्शितम् । प्रज्ञानमिति । अस्य नामैव स्यात् प्रज्ञानं ब्र
ब्रह्मविद्ब्रह्मैव भवति च श्रुतिभ्यां ब्रह्मणा विद्वद्रूपेण स्वमा
त्म्यं न गोपनीयमधिकारिष्वेव । प्राकृतेषु तु गोपनीयमेव । "
चरेत् वै योगी सतां धर्ममदूषयन्॥ जना यथाऽवमन्येरन् ग

संपादयतु । यदा ब्रह्मविद्याव्यापृतस्य परमात्मानमात्मत्वेनावगच्छतः प्रज्ञानमिति नाम स्यात्, ब्रह्मेति नाम भवतीत्यर्थः। तथाच श्रुतिः—"प्रज्ञानं ब्रह्म"इति। तत्प्रज्ञानं ब्रह्म धीरा धीमंतो लभंते, तं योगिन एव पश्यंति ॥ १७॥

किंच—

एवंरूपो महानात्मा पावकं पुरुषो गिरन् ॥
यो वै तं पुरुषं वेद तस्येहात्मा न रिष्यते ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥१८॥

एवमिति । य एवंरूपः प्रज्ञानैकरसो ब्रह्मस्वरूपः सन्नास्ते, स आत्मा महान्संपद्यते ब्रह्मैव संपद्यत इत्यर्थः। पावकमग्निं सर्वोपसंहृतिरूपं कारणं सकारणं कार्यं गिरन् स्वात्मन्युपसंहरन् यो वै तं पुरुषं ज्ञानैकरसं पुरुषं पूर्णं पुरिशयं वेद अयमहमस्मीति साक्षाज्जानाति, तस्य प्रज्ञानरूपं परमात्मानमात्मत्वेनावगच्छतः इहास्मिन्नेव देहे आत्मा न रिष्यते न विनश्यति । विदुष उत्क्रांतेरसंभवात्, उत्क्रांतिनिमित्तत्वाद्विनाशस्य । तथाच श्रुतिः

---

नैव संगतम्"इति । एतच्च प्रज्ञानमिति नाम धीराः ध्यानवंत एव लभंते यस्य नाम प्रज्ञानं तं योगिनः पश्यंति ॥ १७ ॥

एवंरूपो वाङ्मनसातीतो जगज्जन्मादियोनिर्निर्विकारो योगैकगम्यो यज्ज्ञानान्महापूज्यत्वं लभ्यते कर्मक्षोपद्रोपश्च नास्ति स एवंरूपः परमात्मा पावकं भोक्तारं जीवं गिरन् आत्मनि सं-

प्रश्नपूर्वकमुत्क्रांत्यभावं दर्शयति—"उदस्मात्प्राणा उत्क्रामंतीति आहो नेति नेति होवाच याज्ञवल्क्यः, अत्रै समवलीयंते न तस्य प्राणा उत्क्रामंति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद" इति। यं विदित्वा न रिष्यति तं योगिन एव पश्यंति ॥ १८ ॥

यस्मात्तद्विज्ञानादेव नात्मनो विनाशस्तस्मात्—

तस्मात्सदा सत्कृतः स्या-
न्न मृत्युरमृतं कुतः ॥
सत्यानृते सत्यसमानुबंधिनी
सतश्च योनिरसतश्चैक एव ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥१९

तस्मात्सदेति। सदा सर्वदाऽहर्निशं सत्कृतः स्यात् सच्चिदानंदाद्वितीयब्रह्मात्मनाऽभिमन्येत यः, स सदा सत्कृतो भवति। तस्य न मृत्युः जननमरणलक्षण

हरन् पुरुषं पूर्णतया वेद तस्य आत्मा न हिंस्यते कर्मफलबन्धनफलं नानित्यमित्यर्थः। यस्य ज्ञानादात्मनाशो नास्ति तं योगिनः पश्यंति ॥ १८ ॥

एवं सर्वकर्मास्पर्शिनां योगिनामपि दुःसंगत्यागमावश्यकं प्रोक्त्वा जीवन्मुक्तानां तेषामनुभवमनुवदति—सदेति। सदा काल-त्रयेऽपि सत्कृतः ब्रह्मतादात्म्याध्यासेन तद्वत्कृतः सुखदुःखजरा-मरणादिरहितः कृतः अत एव देहवियोगरूपो मृत्युरपि नास्ति

संसारो न भवेत्। अमृतं कुतः मृत्युसापेक्षत्वादमृतस्य तदभावे कुतः प्रसक्तिः। तथाच श्रुतिः—"मृत्युर्नास्त्यमृतं कुतः" इति। सत्यानृते च वर्तेते सत्यसमानुबंधिनी परमार्थसत्यमेकमधिष्ठानमनुबध्य वर्तेत रज्वामिव सर्पः। कथमेतदवगम्यते सत्यानृते सत्यसमानुबंधिनीति? तत्राह—सतश्च लौकिकस्य योनिः कारणम् असतश्च व्यावहारिकस्य रजतादेः एकमेवाद्वितीयं ब्रह्म यस्मात्प्रवदंति तस्मात्सत्यानृते स्वकारणभूतसत्यसमानुबंधिनीति। यदात्मतत्त्वज्ञानकारणात् मृत्योर्विनाशः, यमनुबध्य सत्यानृते वर्तेते तं योगिन एव पश्यंति॥ १९॥

अंगुष्ठमात्रः पुरुषोऽन्तरात्मा—
न दृश्यतेऽसौ हृदये निविष्टः॥

---

नापि अमृत्युस्तद्विरोधी जन्मलाभः जन्ममरणप्रवाहरूपस्य मृत्युसंज्ञितस्य बन्धस्याभावात्। अमृतं मोक्षोऽपि कुतः न कुतश्चिदित्यर्थः। तत्र हेतुः सत्यं घटादि अनृतं रज्जूरगादि ते उभे अपि सत्यसमानबन्धे सत्यं अबाधितं समानं सर्वदा सर्वदेशेषु चैकरूपं ब्रह्म तदेव बन्धो निग्रहस्थानं ययोस्ते तथा सर्वं जगद् ब्रह्माधीनमित्यर्थः। सतः कार्यस्य असतः कारणस्य च योनिः उत्पत्तिप्रलयस्थानं एकमेव तं योगिनः पश्यंति। तथाच श्रुतिः "न निरोधो नचोत्पत्तिर्न बद्धो न च साधकः॥ न मुमुक्षुर्नवै मुक्त इत्येषा परमार्थता"इति सुष्ट्या।दिकं सर्वं मध्येव कल्पितमित्याह॥ १९॥

अजश्चरो दिवारात्रमतंद्रितश्च
स तं मत्वा कविरास्ते प्रसन्नः ॥ २० ॥

अंगुष्ठमात्र इति ।

आकाशादिदेहांतं जगत् सृष्ट्वा हृदये निवि[illegible] अजः चरः चराचरात्मा सन्न दृश्यते स्वेनात्मना चि[illegible] दानंदाद्वितीयेन । तम् अहोरात्रम् अतंद्रितो भूत्वाऽन्न[illegible] दिकोशपंचकेभ्यो निष्क्रम्य सर्वांतरात्मानं मत्वा [illegible] विरास्ते प्रसन्नः कृतार्थः सान्नित्यर्थः ॥ २० ॥

ब्रह्मणो विश्वोपादानत्वमाह—

तस्माच्च वायुरायातस्तस्मिंश्च प्रलयस्तथा ॥
तस्मादग्निश्च सोमश्च तस्माच्च प्राण आगतः॥२[illegible]
तत्प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः ॥
भूतानि जज्ञिरे तस्मात्प्रलयं यांति तत्र च ॥२[illegible]

---

अंगुष्ठेति । उपाधितोऽल्पपरिमाणोऽपि स्वतो महात्मा [illegible] कः न दृश्यते रूपादिहीनत्वात् । अजो जन्मादिशून्यः दि[illegible] रात्रं चरतीति चरः जगन्नियमने नित्योद्युक्त इत्यर्थः । सः [illegible] कारी तं आत्मानं मत्वा ज्ञात्वा कविः क्रांतदर्शी आस्ते [illegible] उपरतो भवति कृतकृत्यत्वात् । अत एव प्रसन्नः उपाधिकृत[illegible] व्यवधानान्निर्मलः ॥ २० ॥

तस्मात्पूर्णात् वायुरिति पञ्चानामपि भूतानामुपलक्षणं । [illegible] स्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायो[illegible]

तस्माच्चेतिद्वाभ्याम् । श्लोकौ स्पष्टौ ॥२१॥२२॥

सर्वमिदं ब्रह्मणः सकाशादुद्भूतं तत्रैव लीयत इत्युक्तं तदेव विवृणोति—

उभौ च देवौ पृथिवीं दिवं च
दिशश्च शुक्रं भुवनं बिभर्ति ॥
तस्माद्दिशः सरितश्च स्रवंति
तस्मात्समुद्रा विहिता महांतः ॥ २३ ॥

उभाविति । देवौ जीवेश्वरौ शुक्लं ब्रह्म कर्तृ बिभर्ति । तस्माद् ब्रह्मणः सकाशाद्दिश उत्पद्यंते "एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठतः" इति श्रुतेरर्थः प्रतिपादितः ॥ २३ ॥

---

ग्निः अग्नेरापः अद्भ्यः पृथिवीति तत एव सर्वभूतोद्भवश्रुतेः । अग्निर्भोक्ता सोमो भोज्यं प्राण इति देहेंद्रियादिसंघातग्रहणम्॥२१॥

इदं सर्वं तत एव आगतं तस्माज्जातं तत् आत्मत्वेन प्रसिद्धं तत् तच्छब्दवाच्यं तदिति वा एतस्य महतो भूतस्य नाम भवतीति श्रुतिप्रसिद्धेः । वक्तुं न शक्नुमः वाचामगोचरं तं योगिनः पश्यंति ॥ २२ ॥

एतदेवाह—उभाविति। देवौ जीवेश्वरौ पृथिव्यादिकं भुवनं ब्रह्मांडं शुक्रो बिभर्ति। तस्मात्सर्वोत्पत्तिमाह—यस्मादिति । महान् दुरधिगमोऽन्तो येषां ते महांतः समुद्राः कामाः कामं समुद्रमाविशेति मंत्रलिंगात् ॥ २३ ॥

इदानीं ब्रह्मणोऽनंतत्वं कथयति—

य: सहस्रं सहस्राणां पक्षानाहृत्य संपतेत् ॥
नांतं गच्छेत्कारणस्य यद्यपि स्यान्मनोजवः ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥२४॥

यः सहस्रमिति । यः पुरुषः सहस्राणां सहस्रं पक्षानाहृत्यात्मनः पक्षान्कृत्वा संपतेत् अनेकशः कोटिकल्पमपि पुरुषो नांतं गच्छेत्सर्वकारणस्य परमात्मनः, यद्यप्यसौ मनोजवस्तथापि तस्यांतं न गच्छेत्। यस्मादन्तं न गच्छन्ति तस्मादनंतः परमात्मेत्यर्थः । यः अनंतः परमात्मा तं योगिन एव पश्यन्ति ॥२४॥

किञ्च—

अदर्शने तिष्ठति रूपमस्य
पश्यंति चैनं सुसमिद्धसत्त्वाः ॥
हीनो मनीषी मनसाऽभिपश्येद्य–
एनं विदुरमृतास्ते भवंति ॥ २५ ॥

न केवलं मोक्ष एव ज्ञावतः स्यात्, अपितु सर्वं दूरस्थमपि आत्मन्यंतर्भूतमेवास्तीत्याह—य इति । दशलक्षाणि अनंतान् पक्षान् कृत्वा यो दूरे गच्छेत्सोपि कारणस्य अंतं न गच्छेत् योगिनः पश्यंतीत्यर्थः । एतच्चातीतानागतादेरप्युपलक्षणम् । तच्च हार्दाकाशं प्रकृत्य श्रूयते यच्चास्येहास्ति यच्च नास्ति सर्वं तद्गत्वा विंदत इति यत्र दूरस्थेऽप्यास्ति तं योगिनः पश्यंति॥२४॥

अदर्शने इति। अदर्शने दर्शनायोग्यविषये तिष्ठति रूपमस्य परमात्मनः। तथा श्रुतिः—"न संदृशे तिष्ठति रूपमस्य" इति। पश्यंति चैनं सुसमिद्धसत्त्वाः यद्यपि दर्शनायोग्ये तिष्ठति तथापि परमात्मानं पश्यंति, के ते? सुसमिद्धसत्त्वाः सुष्टु समिद्धं सम्यग्दीप्तं सत्त्वमंतःकरणं यज्ञादिभिर्विमलीकरणसंस्कारेण येषां ते सुसमिद्धसत्त्वाः। यस्मादेवं तस्माद्धीनो रागद्वेषादिमलरहितो विशुद्धसत्त्वो मनीषी मनसाऽभिपश्येत्। य एनं परमात्मानं विदुरहमस्मीति अमृता अमरणधर्माणस्ते भवंति ॥२५॥

इमं यः सर्वभूतेषु आत्मानमनुपश्यति ॥
अन्यत्रान्यत्र युक्तेषु स किं शोचेत्ततः परम् ॥२६॥

इममिति। इमं सर्वांतरं सर्वभूतेषु सर्वप्राणिषु आत्मानं योऽनुपश्यति अन्यत्रान्यत्र देहेंद्रियादियुक्तेषु शरीराद्यभिमानिषु, स किं शोचेत्ततः परं सर्वभूतेषु स्वात्मानं

---

एवंविधस्यात्मनो दर्शनार्थं योगानुगुणानि साधनांतराण्याह अदर्शने इति। चक्षुराद्यग्राह्यं एनं शुद्धचित्ता एव चित्तेन गृण्हंतीति पूर्वार्धार्थः। किञ्च यदायं हीनो रागद्वेषादिहीनो मनीषी मनोनिग्रहशीलश्च भवति तदैव चित्तशुद्धिर्जायतेति शेषम्। एनं विदुः जानाति ते अमृता भवंतीति ॥ २५ ॥

यः सर्वभूतेषु सद्रूपेण अनुस्यूतमात्मानं गुरूक्तिमनुपश्यति ध्यानेन साक्षात्करोति सः अन्यत्र दारादौ अन्यत्र कर्मादौ यु-

पश्यन् ततः परं किमर्थमनुशोचति सर्वभूतस्थमात्मानम् अनुपश्यन् कृतार्थत्वात् नानुशोचतीत्यर्थः। तथा च श्रुतिः "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" ॥२६॥

तदेवाह—

यथोदपाने महति सर्वतः संप्लुतोदके ॥
एवं सर्वेषु भूतेषु ब्राह्मणस्य विजानतः ॥२७॥

यथेति। यथा सर्वतः संप्लुतोदके उदपाने महति कृतकृत्यस्य पुंसोऽल्पे उदपानेऽर्थो नास्ति, एवं सर्वेषु भूतेषु आत्मानं विजानतः ब्राह्मणस्य किंचिदपि प्रयोजनं न विद्यत इत्यर्थः। आत्मदर्शनेनैव कृतार्थत्वादिति भावः। तथाचाह भगवान्वासुदेवः "न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः" इति ॥२७॥

इदानीमुक्तस्यार्थस्य द्राढिम्ने वामदेवादिवत् स्वानुभवं दर्शय—

अहमेवास्मि वो माता पिता पुत्रोऽस्म्यहं पुनः ॥
आत्माऽहमस्य सर्वस्य यच्च नास्ति यदस्ति च ॥२८॥

---

त्रेषु पुरुषान्तरेषु सत्सु किं शोचति नैव शोचति किन्तु न ए... शोचतीत्यर्थः ॥ २६ ॥

उदकं पीयतेऽस्मिन्नित्युदपाने कासारादौ तृषार्तस्य याव... जलेन स्नानपानादिसिद्धिस्तावत्तेव सर्वेषु वेदेषु आत्मज्ञस्य ... यिन इष्टसिद्धिः अतो ग्रंथभारवहनं वृथैव किन्तु तदंतर्गतं स... युक्तं सारमात्रं गुरुवाक्याद् गृहीत्वा योगेन कृतकृत्यो भवे... त्यर्थः ॥ २७ ॥

हे धृतराष्ट्र! अहमेवास्मि वो युष्माकं माता जनयित्री पिता अपि अहमेव। युष्माकं पुत्रो दुर्योधनादिरहमस्मि। किंबहुना? आत्मा अहमस्मि सर्वस्य प्राणिजातस्य यच्च नास्ति यदस्ति च तस्याहमेवात्मा॥२८॥

एवं तावदाधिभौतिकं पित्रादिकं दर्शितम्। अथेदानीं आधिदैविकं पित्रादिभावं दर्शयति—

पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत॥
ममैव यूयमात्मस्था न मे यूयं न चाप्यहम्॥२९॥

पितामह इति। पितामहोऽस्मि स्थविरः वृद्धः इंद्रादेः पितामहोऽस्मि अनादिसिद्धः परमात्मा सोऽप्यहमेव। यः पिता इंद्रादेः हिरण्यगर्भः सोऽप्यहमेव तथा। मम यूयम् आत्मस्थाः एवं यूयं सर्वे परमार्थतो न मे आत्मनि व्यवस्थिताः, न चाप्यहं युष्मासु स्थितः। तथा चाह भगवान् "मत्स्थानि सर्वभूतानि" इति॥२९॥

---

अथेदानीं ब्रह्मविदात्मनो ब्रह्मभावं वामदेववदपरोक्षीकुर्वन् स्वस्य सार्वात्म्यं स्तौति—अहमेवेति। नास्ति अतीतानागतं अस्ति वर्त्तमानं सर्वेषामंतरात्मा चाहमेवास्मि॥ २८॥

पितामह इति। एवमात्मनि सर्वमारोप्य अपवदति न मे यूयं न चाप्यहमिति। यद्यपि रज्ज्वामुरग आरोपितस्तथापि तयोर्न कश्चित्संबन्धोऽस्ति अधिष्ठानव्यतिरेकेणाध्यस्तस्यासत्वात्। एवं ब्रह्मात्मजगतोरप्यसम्बन्धो द्रष्टव्यः॥ २९॥

आत्मैव स्थानं मम जन्म चात्मा
ओतप्रोतोऽहमजरप्रतिष्ठः ॥
अजश्चरो दिवारात्रमतंद्रितोऽहं
मां विज्ञाय कविरास्ते प्रसन्नः ॥ ३० ॥

यद्यपि न ममात्मनि यूयं व्यवस्थिताः, न चाप्यहं युष्मासु स्थितः, तथापि आत्मैव स्थानम् आत्मैवाश्रयः जन्म चात्मा अस्मादेवात्मनः सर्वमुत्पन्नम् । तथाच श्रुतिः "आत्मन एवेदं सर्वम्"इति । ओतप्रोतः अहमेव ओतप्रोतरूपेण व्यवस्थितः जगदात्मा युष्माकं जनयिता अजरप्रतिष्ठः अजरे जरामरणवर्जिते स्वे महिम्नि तिष्ठामीत्यजरप्रतिष्ठः । तथाच श्रुतिः "स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि"इति ॥ ३० ॥

अणोरणीयान् सुमनाः सर्वभूतेष्ववस्थितः ॥
पितरं सर्वभूतानां पुष्करे निहितं विदुः ॥ ३१ ॥

---

अहमेव मुमुक्षूणां ज्ञेय इत्याह—आत्मैवेति । मम स्थानं आधिष्ठानं आत्मैव स्वे महिम्नि प्रतिष्ठित इति श्रुतेः । अत एव मम जननहेतुरपि आत्मैव अजत्वादेव अहं कार्ये ओतः प्रोतश्च तिर्यगूर्ध्वं च पटे तंतव इवानुस्यूतोऽस्मि अजरा अप्रच्युतस्वभावा प्रतिष्ठा अधिष्ठानत्वं यस्य स तथा अजश्चर इति पादो व्याख्यातः । मां सर्वेषां भूतानामंतरात्मानं सर्वेश्वरं सर्वकर्तारं विज्ञाय कविः प्रसन्न आस्ते ॥ ३० ॥

इति श्रीमहाभारते शतसाहस्त्यां संहितायां वैय्यासिक्या-मुद्योगपर्वणिके धृतराष्ट्रसनत्कुमारसंवादे श्रीसनत्सुजातीये चतुर्थोऽध्यायः ॥ ४ ॥

अणोरिति——

अणोः सूक्ष्मात् अणीयान् सूक्ष्मतरः सुमनाः शोभनं रागद्वेषादिमात्सर्यशोकमोहादिधर्मवर्जितं केवलं चित्सदानंदाद्वितीयब्रह्मात्माकारं मनो यस्य स सुमनाः सर्वभूतेषु सर्वप्राणिषु हृदयकमलमध्ये अहमेवावस्थितः सर्वभूतात्मतया ।

एवं तावत्स्वानुभवो दर्शितः, इदानीं न केवलमस्मदनुभव एवात्र प्रमाणम्, अन्येऽप्येवमेवावगच्छंतीत्याह । येऽन्ये सनकसनंदनसनातनवामदेवादयो ब्रह्मविदस्तेऽपि पितरं सर्वभूतानां सर्वप्राणिनां पिता जनयिता परमेश्वरो यस्तं पुष्करे हृत्पुण्डरीकमध्ये निहितं विदुः परमात्मानमात्मत्वेनागवच्छंतीत्यर्थः। तथाच श्रुतिः तेषामनुभवं दर्शयति-"तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इति बृहदारण्यके । "एतत्सामगायन्नास्ते" इति

---

प्रकरणार्थमुपसंहरति-अणोरिति। अणोरप्यणुतरो दुर्लक्ष्यः न त्वणुतरपरिमाणत्वात् अस्थूलमनण्व-ह्रस्वमदीर्घमिति ब्रह्मणि चतुर्विधपरिमाणनिषेधात् । एतेन निर्गुणं रूपमुक्तं। सुमनाः शोभ-

तैत्तिरीयके सामगानेन स्वानुभवो दर्शितः, आत्मनः कृतार्थत्वद्योतनार्थम्। तथा छांदोग्येऽपि—"तद्धास्य विज्ञौ" इति। तलवकारेच "अहमन्नम्" इत्यादिना विदुष अनुभवो दर्शितः ॥३१॥ तत्रैते श्लोका भवंति—

नित्यशुद्धबुद्धमुक्तभावमीशमात्मना
भावयन् षडिंद्रियाणि संनियम्य निश्चलः ॥
अस्ति वस्तु चिद्घनं जगत्प्रसूतिकारणं
न नश्वरं तदुद्भवं जगत्तमोनुदं च यत् ॥
तत्पदैकवाचकं सदामृतं निरञ्जनम्
चित्तवृत्तिदृक् सुखं तदस्म्यहं तदस्म्यहम् ॥ इति॥१॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदभगवत्पूज्यपादशिष्यश्रीशंकरभगवतः कृतौ सनत्सुजातभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

---

नं मनो दिव्यं चक्षुर्मायाख्यं अतीतादिसर्वप्रकाशकं यस्य मनोऽस्य दैवं चक्षुरिति श्रुतेः। स सुमनाः एतेन सगुणं रूपमुक्तं सर्वभूतेषु अवस्थितः अंतर्यामिरूपेण स्थितः पितरं अर्थाद्वियदादीनां जरायुजादीनां च सर्वभूतानां पुष्करे हृदयपुंडरीके निहितं स्थितं विदुर्ब्राह्मणा जानंति। एवं गुणविशिष्टं प्रत्यगात्मानं हृदये विविनेन साक्षात्कृत्य कृतकृत्यो भवतीत्यर्थः ॥ ३१ ॥

इति श्रीमच्चतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोः श्रीनीलकंठस्य कृतौ उद्योगपर्वणि भारतभावदीपे सनत्सुजातीयटीकायां चतुर्थोऽध्यायः ॥४॥

हरिदाससंस्कृतग्रन्थमालासमाख्य—

# काशीसंस्कृतसीरीज़ पुस्तकमालायाः ।

अस्यां काशी—संस्कृतग्रन्थमालायां विभागशः प्रकाशिता भवति । एतस्यां प्राचीना नवीनाश्च दुर्लभाः सुलभाश्चात्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालाध्यापकैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाशितानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परं तु एतस्या नियमेनाऽविच्छिन्नग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तितं मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।

तत्र मुद्रितग्रन्थनामानि । रु॰ आ॰

१ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्र १ ) [illegible]

२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृताऽन्वयार्थबोधिनीटीकासहितम् । ( वेदान्त १ ) [illegible]

३ वैशेषिकदर्शनम् । सटीक-महाभाष्यादर्शाख्यप्रकाशाभ्यां समन्वितम् । ( वैशेषिक १ ) [illegible]

४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधराचार्य कृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिक १ ) [illegible]

५ लघुशब्देन्दुशेखरः सटीक तत्पुरुषादिसमासि पर्यन्तः ( व्याकरण १ ) [illegible]

६ कारिकावली मुक्ता॰ दिन॰ राम॰ शब्दखण्डसहिता तथा "गुणनिरूपण" दिनकरीय महामहोपाध्याय पं॰ श्रीलक्ष्मणशास्त्रिकृतया सहिता । ( न्याय १ ) [illegible]

७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृत वार्तिकटीकयातत्त्वचन्द्रिकासमवेत विवरणेन च समन्वितम् । ( वेदान्त २ ) [illegible]

८ अलङ्कारप्रदीपः पण्डितवर विश्वेश्वर पाण्डेयनिर्मितः । ( काव्य १ ) [illegible]

९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । ( कामशास्त्र १ ) [illegible]

१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । ( ज्योतिष १ ) [illegible]

११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्र-श्राद्ध-शौच-स्नान-भोजन कल्पसहितम् । ( कर्मकाण्डम् १ ) [illegible]

१२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मङ्गलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिक २ ) [illegible]

१३ श्रीमत्सनत्सुजातीयम् श्रीमच्छङ्कर-भगवत्पादविरचित भाष्येण-नीलकण्ठीव्याख्यया च संवलितम् । [illegible]

१४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदास वि॰ । सञ्जीवनी-शिशुहितैषिणी टीकाद्वयोपेतम सम्पूर्णम् । ( काव्य २ ) [illegible]

१५ शुनःशेपाख्यानम् । आनन्दतीर्थनिर्मितसर्वज्ञभाष्यसंस्कृत-भाषाटीका सहित [illegible]

१६ कारिकावली व्याख्या मुक्तावली-न्यायसिद्धान्त टीका सहित सटिप्पण ( न्याय २ ) [illegible]

१७ पारस्करगृह्यसूत्रं हरिहरभाष्य गदाधरभाष्यद्वयसहितम् । ( कर्मकाण्ड २ ) [illegible]

पत्रादिप्रेषणस्थानम्

हरिदासगुप्ता एण्ड सन्स,
मालिक, चौखम्बा संस्कृत सीरीज़ आफिस,
विद्याविलास प्रेस, गोपालमन्दिर,
बनारस सिटी

October 1932.

THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 418.

श्रीस्कन्दपुराणान्तर्गतः

# प्रणवकल्पः

श्रीमत्परमहंसविद्वद्वरश्रीगङ्गाधरेन्द्रसरस्वत्याख्यभिक्षुनिर्मितेन
प्रणवकल्पप्रकाशाख्यप्रणवभाष्येण
समलङ्कृतः ।

काशीस्थ नित्यानन्द वेदविद्यालये प्रधानाध्यापकेन न्यायाचार्य
काव्यतीर्थ पण्डितढुण्ढिराजशास्त्रिणा सम्पादितः ।

THE

# PRANAVA KALPA

FROM

S'RI SKANDAPURĀṆA

*With the commentary*

PRANAVA KALPA PRAKĀS'A

PRANAVA BHASHYA

*By*

PANDIT GANGÂDHARENDRA SARASVATI

*Edited by*

NYAYACHARYA KAVYATIRTHA

PANDIT DHUNDHIRĀJA S'ASTRI

Principal N. Veda Vidyalaya Benares.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE
*Vidya Vilas Press Benares City.*

1933.

श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—५१८

*Printed by Jai Krishna Das Gupta at the Vidya Vilas Press, Benares.*

THE

# CHOWKHAMBÂ SANSKRIT SERIES

## NO. 418

THE

# PRAṆAVAKALPA

FROM

S'RI SKANDAPURĀṆA

*With the commentary*

PRAṆAVA KALPA PRAKÂS'A

PRAṆAVA BHÂSHYA

*By*

PANDIT GANGĀDHARENDRA SARASVATI

*Edited by*

NYÂYÂCHÂRYA KÂVYATÎRTHA

PANDIT S'RĪ DHŪNDHIRÂJA S'ÂSTRI

Principal N. Veda Vidyâlaya, Benâres.

JAI KRISHNA DAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series office,*

*BENARES.*

1933.

॥ श्रीः ॥

चौखम्बा-संस्कृत-ग्रन्थमाला

ग्रन्थ-संख्या ७२

नं० ४१८.

श्रीस्कन्दपुराणान्तर्गतः

# प्रणवकल्पः ।

श्रीमत्परमहंसविद्वद्वरश्रीगङ्गाधरेन्द्रसरस्वत्याख्यभिक्षुनिर्मितेन

प्रणवकल्पप्रकाशाख्यप्रणवभाष्येण समलङ्कृतः ।

काशीस्थ नित्यानन्दवेदविद्यालये प्रधानाध्यापकेन

न्यायाचार्य काव्यतीर्थ-

पण्डित दुण्ढिराजशास्त्रिणा संस्कृत्यसम्पादितः ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा-संस्कृत-सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

१९१०.

श्री सद्गुरुः शरणम् ।

# उपोद्घातः ।

'ओमित्येदक्षरमुद्गीथमुपासीत' इति छान्दोग्य( १।१।१ ) श्रुतावोङ्कारस्योपास्यत्वम्प्रदर्शितम् । निखिलश्रुतिशिरश्शाखासु प्रथितत्वादोङ्कारोपासनायां न कोऽपि विवाद आस्तिकानाम् । तत्कीदृशी तस्योपासना, को वा तस्यार्थ ? इति यद्यपि तत्र तत्र वेदान्तनिबन्धेषूपपादितन्तथापि निर्गुणोपासनाविधिस्सगुणोपासनाविधिवद्विस्तरेण कुत्रापि विस्तरेणोपनवद्धो न वा ? इति तदर्थमन्वेषमाणैरस्माभिर्महता सौभाग्येन स्कन्दपुराणान्तर्गतस्सभाष्यः प्रणवकल्पाख्यो निवन्धः श्रीमतां स्वर्गवासिनां म० म० पण्डितविन्ध्येश्वरीप्रसादद्विवेदिमहोदयानां पुस्तकालये समुपलब्धस्तत्रभवतां पाठकानामग्रे मुद्रापयित्वोपस्थापितः ।

अत्र च सगुणमूर्त्युपासकेषु विष्णवादिदेवतोपासकानां कृते यथा तत्तद्देवतानां कवचरहस्यपञ्जराद्यङ्गसहितमुपासनमन्यत्र निवद्धन्तथाऽत्रापि निर्गुणोपासकानां कृते प्रणवकवचाद्यङ्गसहितन्तदुपासनमुपनिवद्धम् । प्रथमतश्चास्य प्रणवकल्पपीठिकाप्रकरणे 'यत् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या न मन्यन्ते किमु तत् ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति, ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति, तस्मात्तत्सर्वमभवत्' इति श्रुतौ यथा ब्रह्मेत्यज्ञातस्यतत्त्वं प्राक् ब्रह्मविद्याधिकारि तदेव च प्रमाणसाक्षीकृतस्यतत्त्वं ब्रह्मविद्याफलं दर्शितं, तथाऽत्रापि प्रागुपासनादिनाऽनाविर्भूतस्यतत्त्वा साधकबुद्धिरूपा प्रणवात्मिकोमैव प्रणवविद्याधिकारिणी पश्चाच्च प्रणवोपास्त्यादिनाऽऽविर्भूतस्यतत्त्वा सैव स्वोपास्त्यादिफलमिति प्रदर्शनाय प्रणवाक्षरद्योतिताभिधानां ब्रह्मविधिदेवतां पार्वतीं प्रष्ट्रीत्वेन प्रणवार्थभूतं शङ्करं च वक्तृत्वेन प्रकल्प्य साङ्गप्रणवकलाद्यधारोपासनफलावाप्तिपर्यन्तव्यापारानुवर्णनानादिकालप्रवृत्ताऽऽख्यायिका प्रस्तुताऽनुवर्णनसिद्ध्यर्थमुपनिवद्धा । यत्र तयोस्सम्वादप्रश्नोत्तराभ्यां प्रणवोपासनाधिकारिविषयचर्चापि कृता । तत्र—

अज्ञाननाशनद्वारा प्रणवो मोक्षदायकः ।
न तत्र योग्यता तेऽस्ति यतो नारी भवत्यहो ॥
गायत्र्यां द्विजसङ्घानां यतीनां प्रणवे रतिः ।
नारीणां भर्तृशुश्रूषा न जपो न तपो व्रतम् ॥

इत्यादिशिववाक्येन धर्मस्कन्धभूतस्याऽऽश्रमत्रयस्यापि यदाऽत्र नाधिकारस्तदा स्त्रीशूद्रादीनां कथं स्यादित्यस्त्रैवर्णिकानामेव चतुर्थाश्रमिणामोङ्कारोपासनायामधिकारो नान्येषामिति स्पष्टमेव । यद्यप्यत्रे-

क्लीवश्च पुरुषो योषा चरं चाचरमेव च ।
सर्वं ब्रह्म न तद्भिन्नमद्वैतं परमार्थतः ॥
चतुष्टयं साधनाख्यं यत्र तत्रैव योग्यता ।

इत्यादिपार्वत्युक्तवचनेन स्त्रीशूद्रादीनामपि मुमुक्षा चेत्प्रणवो- स्तावधिकार इति विभावयितुं शक्येत, तथापि

कर्मणा मनसा वाचा ये त्यजन्ति यतीश्वराः ।
गायत्रीमथ सावित्रीं तेषां प्रणवयोग्यता ॥

इत्यादिशिववाक्येभ्यः सर्वकर्मत्यागपर्यन्तं येषां साङ्गकर्मकर्तृ- चित्तशुध्या सर्वाद्वैतं पश्यतामधिकारः संजातस्तेषामेव प्रणवयोग्यते- सिद्धान्तेन नैव यस्य कस्यचिद्वर्णस्य यस्य कस्यचिद्वाऽऽश्रमस्याधि- कारोऽतो न स्त्रीशूद्रादीनामत्राधिकारः । पार्वत्याश्च स्त्रीत्वेऽपि देव- त्वान्न दोषः, अत एव माधवेन्द्रसरस्वत्यापि उक्तश्लोकव्याख्याया- 'अयं भावः संन्यासिनामेव प्रणवाधिकारो न स्त्रीणामिति नियमो म- नुष्येष्वेव न देवेषु, सर्वसाधनविशुद्धिरूपा साक्षात्प्रणवात्मिका ब्रह्म- विद्या देवता चाऽहं लोकानुग्रहाय शुश्रूषादिसदाचारव्यवहारेण प्रश्नो- त्तरानुव्यापारेण त्वन्मुखान्मत्स्वरूपामेव प्रणवविद्यां जगति प्रकटीक- प्रवृत्ता न स्वार्थम्' इत्यादि वदता दृढीकृतोऽयमर्थस्तस्मादाधुनिकानां वृद्धंमन्यानां केषांचित्साधारण्येन प्रणवोपासनाधिकारप्रदानं सर्वदा- ऽनुचितमेवेति कृतं पल्लवितेन ।

ततश्चाङ्गस्तुतिकवचवर्णनान्ते सर्ववेदसारभूते प्रणवहृदयेऽध्या- रोपापवादाभ्यां निष्प्रपञ्चं ब्रह्मैव प्रणवेन बोध्यत इति प्रणवनवांशाक्ष- रादिविस्तृतार्थवर्णनया व्यक्तमुपपादितम् । एवंभूतहृदयपाठान्ते प्र- णवोपासकेन प्रणवजपं विधाय पुरश्चरणं कार्यमिति पुरश्चर्याविधिरप्य- वादसनाथः प्रथमाध्यायान्ते निबद्धः ।

ततश्च द्वितीयाध्याये सर्वात्मकत्वादनन्तनामकस्य प्रणवस्य साद्गुण्य- तान्यष्टोत्तरशतनामानि निर्गुणोपासनोपयोगिश्रुतिशिरःप्रसिद्धार्थानि निरूप्यान्तेऽथर्ववेदरहस्यभूतानि प्रणवशोडषनामान्याख्यातानि सार्थ- दम् । वज्रपञ्जरमिवाभेद्यमभेद्यब्रह्मस्वरूपं प्रणवपञ्जरमुक्त्वा गद्यमन्त्र- काव्यगुणवत्या च वाचा चमत्कारविधायिन्या नाममालामन्त्रं वर्णयि- त्वा प्रणवगायत्रीरहस्यार्थस्तद्यन्त्रलेखनोद्धारश्च प्रणवस्तवराजसहितस्तृ- तीयेऽध्याये सुनिरूपितः । अन्ते चास्याध्यायस्य प्रणवाक्षरनवांश-

प्रत्येकं गुणमाहात्म्यादिप्रकाशकं वेदान्तप्रसिद्धार्थाभिधायकमक्षरमालिकास्तोत्रं शार्दूलविक्रीडितछन्दसा नवभिः पद्यैर्विदुषां मनोमोदावहं प्रणवानुस्मृत्यङ्गोपासनफलसहितं सुसम्पादितम् ।

चतुर्थेऽध्याये ओङ्कारोपासिकायाः श्रीमत्या गौर्या आकाशवाणीद्वारौङ्कारस्वरूपब्रह्मसाक्षात्कारप्रतिपादिकामतीवचमत्कारकार्याख्यानकसहितामोङ्कारगीतां निखिलगीताप्रधानां गीतार्थशब्दनिर्वचनसहितामप्रतिपाद्योक्ताकाशवाणीश्रवणसंजातविस्मययोः शिवपार्वत्योस्तन्निश्चयपूर्वकमोङ्कारोपासनविधानं वर्णितम् ।

अन्तिमे च पञ्चमाध्याये प्रणवदिव्यसहस्रनामस्तोत्रं तदृषिछन्ददेवताबीजशक्तिकीलकध्यानाद्यङ्गकथनपूर्वकं वेदान्तार्थप्रतिपादकं कथितम् । यत्र नामसंख्यासम्पूर्तये रुद्राध्यायस्थनाम्नामपि सङ्ग्रहः कतिपयानां कृतो, येनाऽत्राऽऽर्पार्थद्योतनद्वारा ब्रह्मभूयस्त्वसंपत्तिरुद्दङ्क्यते । अन्ते चाऽत्र 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रौतन्यायेन सर्वाश्रमिणां चित्तशुद्धिसद्भावे प्रणवोपासनाधिकार इति सहस्रनामार्थवादग्रन्थे सम्यगुपपादितम् ।

एवं साङ्गप्रणवोपासनाविधायको वेदान्तसारग्राहकोऽयं प्रणवकल्पाभिधानः सभाष्यो निबन्धोऽस्माभिर्महता श्रमेण संशोधितोऽपि एकस्यैवादर्शपुस्तकस्याशुद्धिबहुलस्य सद्भावेन सीसकाक्षरसंयोजनादोषाद्दृष्टिदोषाद्वा संजाता अशुद्धीः शुद्धिपत्रसाहाय्येन प्रमार्ज्याऽध्येतव्यः पाठकैरिति मुहुर्मुहुः प्रार्थये ।

संस्कृतविद्योद्धारे बद्धपरिकराणां श्रेष्ठिकुलावतंसजयकृष्णदासगुप्तमहोदयानां च महता समुत्साहेनैवेदृशां प्राचीनगुप्तप्रायापूर्वविषयनिबन्धानामुद्धार ईदृशेऽपि धर्मलुम्पके समये भवतीति विना तेभ्यो धन्यवादप्रदानं नैवास्माकं मनःप्रमोदप्रवाहाः स्थिरीभवन्ति ।

ईदृशोऽयं निबन्धचूडामणिस्सर्वाश्रमिप्रधानानां परिव्राजकपदाभिधेयानां सन्यासिनां तु ब्रह्मनिष्ठानामतीवोपकारक इति तैरवश्यं सङ्ग्रहणीय इति विज्ञाप्यतेऽन्ते चैतत्कर्मणा भगवान् सर्वज्ञः सर्वान्तर्यामी सर्वजगद्रूप ओङ्कार एव प्रसीदतामिति च प्रार्थयन्—

यदीयकरुणालेशवशगेयं जनुर्मम ।
सफला तां गोपिकाख्यां मातरं मनसा स्मरन् ॥
पित्रोश्चरणयोरेनमोङ्कारकुसुमाञ्जलिम् ।
शास्त्र्युपाह्वो ढुण्ढिराजः समर्पयति मुक्तये ॥

मातृनवमी १९९०
अगस्त्याश्रमः काशी ।

सभाष्यप्रणवकल्पसंगृहीतप्रकरणानां

## सूचीपत्रम्।

सभाष्यप्रणवकल्पस्य

# विषयसूचीपत्रम् ।

## १ अध्याये—

यतिप्रवरगङ्गाधरेन्द्रसरस्वतीविरचितेन प्रणवकल्प-
प्रकाशाख्य-प्रणवभाष्येन समलङ्कृतः

# प्रणवकल्पः ।

---

श्रीगणाधिपतये नमः ।

गुरुगणपतिशम्भुश्रीशवाणीशदुर्गा-
रविशशिशुचिमुख्यान्सर्वगीर्वाणनाथान् ।
प्रणवमपि च वेदान् व्यासपूर्वांश्च नत्वा
प्रणवहृदयकल्पं व्याचिकीर्षे शिवोक्तम् ॥

प्रणवजपध्यानार्थविचारादौ यज्ञदानतपोविशोधितचित्तानां तीव्रमुमुक्षापर्यवसितसाधनसम्पन्नानां ब्राह्मणानामेवाधिकार इति प्रदर्शनार्थमाख्यायिकां प्रस्तौति—

सत्रान्ते नैमिपारण्ये शौनकस्य महीयसः ॥
आसीनं मुनिशार्दूलं सूतं पौराणिकोत्तमम् ॥ १ ॥

*सत्रान्त इत्यादिना* । महीयसः महत्तरस्य कुलपतेरिति यावत् । अब्राह्मणस्य सूतस्य कथं ब्राह्मणेभ्यः प्रणवतत्त्वोपदेशे अधिकार इति आशङ्कावारणाय विशिनष्टि मुनिशार्दूलमिति, पौराणिकोत्तममिति च । यावत्पुराणोपदेशकालव्यासवरप्रसादप्राप्तब्राह्मणोत्तमत्वसार्वज्ञ्यादिसर्वकल्याणगुणसम्पन्नमिति भावः ॥ १ ॥

समागत्य परीवृत्य शौनकाद्या महर्षयः ॥
यथेष्टाः सत्कथाः पुण्याः पर्यपृच्छन् मुमुक्षया ॥ २ ॥

समागत्य विधिवदुपगम्य, परिवृत्य परिवार्य, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्" इत्यत्र बहुलग्रहणादन्यत्रापि दीर्घः । यथेष्टाः यथाभिलषिताः । मुमुक्षयेति साधनचतुष्टये उत्कटमुमुक्षाया एव सर्वसाधनसम्पादने श्रवणादिध्यानफलान्ते व्यापारे प्रसक्त प्रवर्त्तकत्वप्रदर्शनार्थम् ॥ २ ॥

मन्त्रान्मसञ्जयंस्तत्र शौनकः प्रत्यभाषत ॥

शौनक उवाच—

सूत सूत महाप्राज्ञ व्यासशिष्य महामते ! ॥ ३ ॥

तत्र तेषु पृच्छत्सु मुनिषु मध्ये, सर्वाभिप्रायज्ञः शौनको मन्त्रान्प्रस्तुयन् अवश्यवर्णनीयतया प्रस्तावयन्, प्रत्यभाषत अपृच्छत् ॥ ३ ॥

तत्रादौ स्वाभिलषितमन्त्रानुवर्णने तव सामर्थ्यमस्त्येवेत्याशयेनाह—

श्रुताः पुराणसंसिद्धाः मन्त्रगोप्याश्च तत्कथाः ॥
कृष्णद्वैपायनाद्विष्णोस्तत्कटाक्षस्त्वयि प्रभो ! ॥ ४ ॥

*श्रुता इति सार्धेन*, साक्षाद्विष्णोः कृष्णद्वैपायनात् श्रुतास्त्वयेति शेषः ॥ तस्य कृष्णद्वैपायनस्य कृपाकटाक्षश्च ब्राह्मण्यसार्वज्ञ्यादिसम्पादकत्वस्य प्रसृतः । अतः प्रभो समर्थ ! ॥ ४ ॥

अज्ञातं तव नास्त्येव तस्मात्पौराणिकोत्तम ! ॥
सप्तकोटिमहामन्त्राः साङ्गोपाङ्गा जयन्ति वै ॥ ५ ॥

जयन्ति जपितुः पापदुःखाद्यभिभवन्ति फलोत्कर्षेण सर्वोत्कर्षं च प्रापयन्ति ये, इत्यर्थः । वैशब्दः प्रसिद्धौ ॥ ५ ॥

अपवर्गप्रदः को वा तत्र नो वद भूसुराः ॥
यज्जपान्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ६ ॥

तत्र तेषु मन्त्रेषु, भूसुराः अधिकारिणः विष्णोः, परं पदं मोक्षं यान्ति प्राप्नुवन्ति । पाठान्तरं हे भूसुरेति सूतसम्बोधनं व्यासानुग्रहं लब्ध्वा ब्राह्मण्यसूचनार्थम् ॥ ६ ॥

इत्युक्तो मुनिभिः सूतः प्रोवाच मुनिसत्तमान् ॥

सूत उवाच—

भो भो हे मुनयः श्रेष्ठाः ! साधु पृष्टं महात्मभिः ॥ ७ ॥

*मुनिभिरिति* ॥ उक्तप्रकारेण शौनकमुखेन उक्तः पृष्टः सूतः । भो भो इति पूजावचनस्य भवच्छब्दस्य "विभाषा भवद्भगवदघवतामोच्चावस्य" इति (वार्त्तिकेन) कृतोत्वस्य आभीक्ष्ण्यद्योतनात् 'नित्यवीप्सयोः' रिति कृतद्विवचनस्य सम्बुध्यन्तस्य प्रयोगो, न तु संबोधनमात्रद्योतिनो निपातस्य, तेन सम्बोधनद्योतिनो हेशब्दस्य न पौनरुक्त्यम्, वाचकानामेवोक्तार्थानामप्रयोगो न तु द्योतकानां, बहुभिरपि दीपैरेकस्यार्थस्य द्योतनदर्शनादिति वा न पौनरुक्त्या दोषः । अथवा भो भो इति प्राधान्याच्छौनकस्य सम्बोधनम्, हे मुनय इत्यन्येषाम् । महात्मभिर्भवद्भिः साधु पृष्टम् ॥ ७ ॥

तेषां मुमुक्षापर्यवसितसर्वसाधनसम्पत्त्या श्रवणाधिकारलक्षणं श्रैष्ठ्यमुक्तमुपपादयति–

संसारासारबुद्धीनां मोक्षेच्छा भवति ध्रुवम् ॥

शार्दूलपशुजातीनामाश्रमप्रान्तवर्त्तिनाम् ॥ ८ ॥

*संसारेत्यादिना* संसारः न विद्यते सारः सत्यनित्यपरमानन्दलक्षणः पुरुषार्थो यस्मिंस्तथाविधः सारसुखविरुद्धदुःखप्रचुरश्चेति बुद्धिर्येषाम् । अनेन नित्यानित्यवस्तुविवेक इहामुत्रफलभोगविरागश्च तेषां दर्शितः । शमदमादिसम्पत्तिं दर्शयति–*शार्दूलेति* ॥ यदा वः आश्रमप्रान्तवासिनां शार्दूलगवादिपशुजातीनां नैसर्गिकमपि परस्परवैरं नास्ति तदा वस्तत्कुतोऽस्ति, अतः वो वाञ्छितं प्रणवरहस्यं वक्ष्यामीति परेणान्वयः ॥ ८ ॥

अपवर्गप्रदः को वा मन्त्र इति प्रश्नस्योत्तरत्वेन प्रणवमेवावधार्य प्रस्तौति–

नास्ति वैरं कुतो वोऽस्ति ततो वक्ष्यामि वाञ्छितम् ॥

अपवर्गप्रदो नूनं प्रणवाख्य परो मनुः ॥ ९ ॥

*अपवर्गप्रद इत्यादिना* ॥ ९ ॥

ततो यूयं तमेवेत्थं मन्त्रं जपत सत्तमाः ! ॥

नृसिंहमन्त्रराजाद्यास्तारतम्यफलप्रदाः ॥ १० ॥

तारतम्यफलप्रदाः सकामानां काम्यफलप्रदा, निष्कामानां क्रममुक्तिप्रदाः ॥ १० ॥

तस्माज्जपत तं यूयं साङ्गं मनुमनुत्तमम् ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ॥ ११ ॥

( ब्रह्म वै सत्यं सत्यं पुनः सत्यम् )

तं प्रणवं, साङ्गं वक्ष्यमाणाङ्गसहितं मनुं मन्त्रम् । "यत् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या न मन्यन्ते, किमु तत् ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति, ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति, तस्मात्तत्सर्वमभवदिति" श्रुतौ यथा ब्रह्मत्वज्ञातस्वतत्त्वं प्राक् ब्रह्मविद्याधिकारि तदेव प्रमाणसाक्षीकृतस्वतत्त्वब्रह्मविद्याफलमिति दर्शितं, तथा अत्रापि प्राक् उपासनादिना अनाविर्भूतस्वतत्त्वा साधकबुद्धिरूपा प्रणवात्मिका उमैव
[ब्रह्म]विद्याऽधिकारिणी पश्चाच्च प्रणवोपास्त्यादिना आविर्भूतस्वतत्त्वा सैव सोपास्त्यादिफलमिति प्रदर्शनाय प्रणवाक्षरयोति।।[illegible]

यतां पार्वतीं प्रष्टृत्वेन प्रणवार्थभूतं शङ्करं च वक्तृत्वेन परिकल्प्य सा प्रणवकलावधारणोपासनफलावाप्तिपर्यन्तव्यापारानुवर्णनेनानादिकालप्रवृत्तामाख्यायिकां प्रस्तुतानुवर्णनसिद्ध्यर्थमवतारयति *अत्रैवेति* ॥११॥

पुरा गौर्या महादेवः पृष्टो व्याचष्ट भूसुराः ॥
कदाचिदीश्वरः शम्भुस्तपस्तेपे हिमाचले ॥ १२ ॥

व्याचष्ट विविधाङ्गकलापसहितमाचष्टेति संक्षिप्योक्तिः, तां विस्तरेण विवृणोति—*कदाचिदित्यादिना* । ईश्वरः सर्वशक्तिसम्पन्नः शम्भुः सर्वसुखकरः, अनेन शिष्यानुग्रहसमर्थः परमदयालुश्च गुरुः स्यादिति सूचितम् । तपश्चरणादिकथनं तु तपस्विन एव गुरवः शुश्रूषापरानेव शिष्यानुपदिशेयुरित्याचारशिक्षणार्थम् ॥ १२ ॥

पार्वती कन्यका भूत्वा देवं शुश्रूषया सदा ॥
तोषयामास तान्देवस्तुष्टः प्रोवाच सस्मितम् ॥ १३ ॥

कन्यका भूत्वेत्युक्तिर्बाल्यात्प्रभृति मोक्षाय यतितव्यमिति सूचनाय। सदा शुश्रूषयां देवं तोषयामास । ब्रह्मविद्याधिदेवतायाः ब्रह्मविच्छ्रेष्ठया गुरुशुश्रूषादिविडम्बनमाचारशिक्षणपूर्वकं सकलात्मविद्याप्रकटनेन लोकानुग्रहमात्रं प्रयोजनम्—इति देव्याशयपरिज्ञानसूचनाय सस्मितम् ॥ १३ ॥

अत एवेश्वरो देवीमुखेनैवममर्थं प्रकटीचिकीर्षुः कौतुकार्थं ब्रह्मविद्यायां देव्या अनधिकाराभिसन्धिरिव तां प्रथमं धनधान्यादिक्षुद्रफलेन प्रलोभयति—

ईश्वर उवाच—

वरं वृणीष्व हे गौरि ! प्रीतोस्मि तव सेवया ॥
नासाध्यं विद्यते मेऽत्र धनधान्यगृहादिषु ॥ १४ ॥

*वरमिति* ॥ १४ ॥

इत्युक्ता वचनं प्राह मेघगम्भीरया गिरा ॥

पार्वत्युवाच—

भवं त्यजामि येनाहं मोक्षं ब्रह्माप्तिलक्षणम् ॥ १५ ॥

मेघगम्भीरया गिरा इति उक्ता सती प्रसन्ने शिवे संसाररोगमूलोपच्छेदोपलक्षितनित्यनिरतिशयानन्दप्राप्त्युपाय एव प्रार्थनार्हो न क्षुद्रफलमित्याशयेन पार्वत्युवाच *भवमिति* ब्रह्माप्तिराभूतब्रह्मस्वभावेन स्थितिस्तल्लक्षणम् ॥ १५ ॥

प्राप्नुयां तमिमं देव ! मन्त्रं मह्यमुपादिश ॥
आह पृष्टस्तया देवो मैवं वद शुभेक्षणे ! ॥ १६ ॥

सकलापमुपादिश अर्थविवरणेन आदिश । कौतुकाभिसन्धिमाविष्कुर्वन्नीश्वरः प्रणवाधिकारिणो निरूपयितुं देव्याः मन्त्रं मह्यमुपादिशेत्युक्तिरयुक्तेति निराचष्टे—*मैवमिति* ॥ शुभं शास्त्रानुसारि ईक्षणं यस्यास्तथाविधे ॥ १६ ॥

अयुक्ततामेव दर्शयति—

अज्ञाननाशनद्वारा प्रणवो मोक्षदायकः ॥
न तत्र योग्यता तेऽस्ति यतो नारी भवत्यहो ॥ १७ ॥

*अज्ञानेत्यादिना* *योग्यता अधिकारः* ॥ १८ ॥

यत्र धर्मस्कन्धभूतस्याश्रमत्रयस्यापि नाधिकारस्तद्दूरे स्त्रीशूद्रादीनामधिकारप्रत्याप्सेत्याशयेनाह—

गायत्र्यां द्विजसंघानां यतीनां प्रणवे रतिः ॥
नारीणां भर्तृशुश्रूषा न जपो न तपो व्रतम् ॥ १८ ॥

*गायत्र्यामिति* ॥ केषां तर्ह्यधिकारस्तत्राह *यतीनामिति* ॥ मोक्षाय यतनशीलानां चतुर्थाश्रमाणां, रतिः प्रीतिरधिकार इति यावत् ॥ स्त्रीणां तर्हि क्वाधिकारस्तत्राह *भर्तृशुश्रूषेति* । यद्यपि चिरण्टीनां तपोव्रतादौ भर्त्रा सहाधिकारोऽस्त्येव तथापि स्वातन्त्र्येण तन्निषेधः । कन्याविधवयोः पितृपुत्राद्याज्ञयैवाधिकारः ॥ १८ ॥

ततो वरय राज्यादिप्राप्तिं यद्यस्ति ते मनः ॥
कर्मणा मनसा वाचा ये त्यजन्ति यतीश्वराः ॥ १९ ॥

ततः प्रणवे अनधिकारात् । किञ्च विधिना परिगृहीतानि संध्यावन्दनाग्निहोत्रादिनित्यनैमित्तिकादिवाकर्माणि तत्फलविविदिषावैराग्यादिसत्त्वनन्तरं विधिनैव त्यक्तवतां प्रणवेऽधिकारः, नच स्त्रीणां तत्परिग्रहः परित्यागो वा वैधोऽस्तीत्याह—*कर्मणेति* ॥ १९ ॥

गायत्रीमथ सावित्रीं तेषां प्रणवयोग्यता ॥
आह पृष्टैवमीशानं मैवं भाषस्व शङ्कर ! ॥ २० ॥

गायत्रीसावित्रीग्रहणं त्रिकालसन्ध्यादिसर्वकर्मोपलक्षणम् । एवं कौतुकादीश्वरेण निरस्ताधिकारा अधिकारे हेत्वन्तरमस्ति चेद्वदेति पृष्टा पार्वती स्वाशयमाविष्कर्तुं कौतुकोक्तिराजंयेन भक्त्या पृच्छतु माहेश-

ष्वयुक्तेत्याशयेनाह *मैवं भापस्वेति* ॥ अयं भावः । संन्यासिनामेव प्रणवाधिकारो न स्त्रीणामिति नियमो मनुष्येष्वेव न देवेषु, सर्वसाधनविशुद्धिरूपा साक्षात्प्रणवात्मिका ब्रह्मविद्याधिदेवता चाहं लोकानुग्रहाय शुश्रूषादिसदाचारव्यवहारेण प्रश्नोत्तरानुव्यापारेण त्वन्मुखान्मूलरूपामेव प्रणवविद्यां साङ्गां जगति प्रकटीकर्तुं प्रवृत्ता न स्वार्थम् । भवं त्यजामि येनाहं मोक्षं ब्रह्मातिलक्षणमिति मदुक्तिरपि स्त्रीपुंनपुंसकादिसर्वरूपा या मम साधकानां जनानां भवतरणविषयेति सर्वज्ञस्त्वं जानास्येव । अतो न कौतुकोक्तिमात्रेण ममानधिकारस्त्वया आपादनीयः । किञ्चेदमनधिकारापादनं न त्वत्कर्तृके प्रणवोपदेशे अविमुक्तोपासकस्याविमुक्ते म्रियमाणस्य च स्त्रीपुंनपुंसकस्थावरादिजन्तुमात्रस्य त्वया प्रणवरहस्योपदेशनात् ॥ तथा च श्रुतिः 'अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे, येनासावमृतीभूत्वा मोक्षीभवतीति, तस्मान्मैवं भापस्वेति सुष्ठूक्तमिति ॥ २० ॥

यदि तु 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदिति'श्रुतिदर्शितदिशा ब्रह्मैव स्वाज्ञानात्स्त्रीपुंनपुंसकस्थावरादिदेहेषु संसरद्विमुक्तमरणकाले प्रारब्धकर्मक्षयकाले वा त्वदनुग्रहदग्धपापमुपदेशाधिकारीति मन्यसे, तर्ह्यहमप्यन्ततो विशुद्धा ब्रह्मैवास्मीति सदैव तवार्द्धाङ्गभागिनी प्रेयसी कुतो नाधिकारिणीत्याशयेनाह-

क्लीबश्च पुरुषो योषा चरं चाचरमेव च ॥
सर्वं ब्रह्म न तद्भिन्नमद्वैतं परमार्थतः ॥ २१ ॥

*क्लीबश्चेति* ॥ २१ ॥

तस्मान्मनुष्यस्त्रीणामुपनयनाध्ययनासंस्कृतत्वान्मनुष्यकर्तृके प्रणवोपदेशेऽस्त्यनधिकारः । देवानां तु 'न ह वै देवान्पापङ्गच्छेदि'ति श्रुतेः स्वतःसिद्धविशुद्धत्वात्साधनचतुष्टयसम्पत्त्यैव प्रणवादिविद्याधिकारः सिद्ध इत्याशयेनोपसंहरति--

चतुष्टयं साधनाख्यं यत्र तत्रैव योग्यता ॥
ततो वद मया पृष्टं तारकं भवतारकम् ॥ २२ ॥

*चतुष्टयमिति* । विविक्तवैराग्यमुमुक्षाशमादयश्चेत्येवमाख्यं साधनानां चतुष्टयम् ॥ २२ ॥

साक्षाद्ब्रह्मतत्त्वोपदेश एव कुतो न प्रार्थ्यते तत्राह--

तारकं रूपमास्थाय ब्रह्म प्राप्नोत्यसंशयम् ॥
तुतोष वचनं श्रुत्वा वाक्यं प्रोवाच शङ्करः ॥ २३ ॥

*तारकमिति* । यतः साधकस्तारकोपासनात्तारकस्वरूपं स्वयमास्थाय तदाविर्भूतज्ञानाग्निनिर्दग्धकामकर्मवासनादिमलो निःसंशयं ब्रह्म प्राप्नोति नोपायान्तरेणेत्यर्थः । तथाच श्रुतिः—

"प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेदि"ति ॥
आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः ॥

इति च । देव्युक्तं सप्रमाणं सोपपत्तिकं वाक्यं श्रुत्वा शंकरस्तुतोष ॥ २३ ॥

ईश्वर उवाच—

कृतार्थासि कृतार्थासि मुमुक्षा यत्तवाऽस्ति भो ! ।
इत्युक्त्वोपदिदेशैनां तारकं भवतारकम् ॥ २४ ॥

कृतार्थासीति देवीप्रशंसापि अधिकारिबुद्धिप्रशंसैव ॥ २४ ॥

अङ्गान्यपि तथा तस्यै भाषते परमेश्वरः ।
प्रथमं कवचं दिव्यं पञ्जरं तदन्तरम् ॥ २५ ॥

*अङ्गान्यपीति* ॥ यद्यपि सूतोक्तक्रमे अङ्गस्तुतिः प्रथमं दृश्यते, तथापीश्वरोक्तक्रमः कवचादिरेव ॥ २५ ॥

हृदयं प्रणवार्थाख्यं नाम्नामष्टोत्तरं शतम ।
अङ्गस्तुतिं तथा मन्त्रां पुरश्चरणपद्धतिम् ॥ २६ ॥

प्रणवार्थं आख्याति प्रकथयतीति प्रणवार्थाख्यम् ॥ २६ ॥

प्रसङ्गात्सन्मन्त्रसाधारणान्यङ्गान्याह—

अङ्गन्यासं करन्यासं माहात्म्यं तदपेक्षितम् ।
नाम्नां सहस्रं दिव्यानां प्रणवस्य शुचिस्मिते ! ॥ २७ ॥

*अङ्गन्यासमिति द्वाभ्याम्* तेन मन्त्रमात्रेण प्ररोचनार्थमपेक्षितम्, अत एव प्रणवस्येति मन्त्रमात्रोपलक्षणम् ॥ २७ ॥

स्तवराजादिसर्वाणि मालामन्त्रमनुस्मृतिः ।
मन्त्रमात्रस्य सर्वस्याप्येतान्यङ्गानि पार्वति ! ॥ २८ ॥

आदिपदेन ऋषिच्छन्दोदेवताध्यानबीजशक्तिकीलकाक्षरन्यासपूजाविधानादि ॥ २८ ॥

अङ्गहीनो मनुर्जप्तो भस्माहुतिसमो भवेत् ।
ॐकारजञ्जपूकानां जप्यान्यङ्गानि दण्डिनाम् ॥ २९ ॥

जञ्जपूकानां पुनःपुनर्जपशीलानां, जपेः 'क्रियासमभिहारे यङ्', आ-जभेत्यभ्यासस्य नुक्, यजजपदशां यङ्, इत्यूकप्रत्ययः, षष्ठीतत्पुरुषः। अङ्गानि कवचादीनि, दण्डिनामेकदण्डिनामपि ॥ २९ ॥

इत्येवं सकलैरङ्गैः पार्वत्या उपदिष्टवान् ।
जजाप च महादेवी मोक्षाय कमलेक्षणा ॥ ३० ॥

सकलैरङ्गैः सह प्रणवमुपदिष्टवानीश्वर इति शेषः ॥ ३० ॥

आचरन्तु भवन्तोऽपि लभन्तां मोक्षमुत्तमम् ।
तथोपदिश सूत ! त्वं यथेशो रोमहर्षण ! ॥ ३१ ॥

आचरन्तु साङ्गप्रणवोपासनमिति शेषः । यथा ईशः पार्वत्यै उपदिष्टवान्, एवं त्वमस्मभ्यं प्रणवरूपिणं मन्त्रं तथा सकलान्यङ्गानि च उपदिशेति परेणान्वयः ॥ ३१ ॥

तत्रेतराङ्गसहितप्रणवोपास्तेः प्रथमत्वादङ्गविशुद्धिपूर्वकत्वादीशांक्तपाठक्रमादार्थक्रमबलीयस्त्वमाश्रित्य सूतः प्रथममङ्गस्तुतिं वक्तुं प्रतीजानीते—

अङ्गानि सकलान्येवं मन्त्रमोङ्काररूपिणम् ।

इति प्रणवकल्पपीठिका ॥

अङ्गानां च विशुद्ध्यर्थमङ्गस्तुतिमहं ब्रुवे ॥ ३२ ॥

*अङ्गानामिति* ॥ मस्तकादीनां सर्वाङ्गानां स्वस्वोचितचेष्टाभिः प्रणवैकप्रवणताप्रार्थनेन तत्परत्वलक्षणगुणोत्कर्षकताप्रतिपादनमङ्गस्तुतिं ब्रुवे ॥ ३२ ॥

मस्तक ! त्वं दैवतानि नम प्रणवरूपिणम् ।
युवां च शृणुतं श्रोत्रे ! प्रणवार्थं च नान्यथा ॥ ३३ ॥

हे मस्तक ! त्वं पृथक् दृष्टो त्रयस्त्रिंशत्कोटिदैवतानि एकत्वदृष्ट्या प्रणवरूपिणमेकमीश्वरं नम प्रणामैः सदा तत्प्रवणो भव ॥ हे श्रोत्रे ! युवां च प्रणवार्थं वक्ष्यमाणं माण्डूक्यादिश्रुत्युपपादितं चकाराच्चतुष्पादकन्यायांश्च शृणुतं, श्रवणप्रवणतामन्तरेण मा वृथा तिष्ठतमित्यर्थः ॥ ३३ ॥

युवां च पश्यतं नेत्रे ! प्रणवार्थविलेखनम् ॥
युवां च वहतं हस्तौ ! प्रणवार्थस्य पुस्तकम् ॥ ३४ ॥

विलेखनं लिखिताक्षरजातमिति यावत्, वहतं धारयतम्, दर्शनयोग्यतां प्रापयतमिति वा ॥ ३४ ॥

युवां च गच्छतं पादौ ! बोधको यत्र तस्य वै ॥
मनो ! मनुष्व भद्रन्ते प्रणवार्थं शुभप्रदम् ॥ ३५ ॥

तस्य प्रणवार्थस्य बोधको गुरुर्यत्रास्ति तत्र गच्छतम्। मनुष्व सदैव मननप्रवणं भव ॥ ३५ ॥

बुद्धे ! निश्चय तस्माच्च नान्यदस्तीति चित्तक ! ॥
चिन्तयोङ्कारतात्पर्यं भेदबुद्धिनिरासकम् ॥ ३६ ॥

हे बुद्धे ! तस्मादर्थात् ब्रह्मण अन्यन्नास्तीति निश्चय। छान्दसो विकरणव्यत्ययः। हे चित्तक ! त्वं 'नातः परमि'त्यादिश्रुतिदर्शितरीत्या अवस्थात्रयनिषेधेन भेदबुद्धिनिरासमोङ्कारतात्पर्यं चिन्तय ॥ ३६ ॥

अहङ्काराऽहङ्कुरुष्व प्रणवार्थविशोधने ॥
मया तुल्यो न चास्तीति संसारार्णवनाशने ॥ ३७ ॥
प्राणान् धारय मद्देहे यावदोङ्कारशोधनम् ॥
किमत्र बहुनोक्तेन, सर्वाण्यङ्गानि मे सदा ॥ ३८ ॥

संसारार्णवशोषणे प्रणवार्थविशोधने चकाराद्विशोधितात्मस्वभावेऽपि मया तुल्यं नास्तीति अहङ्कुरुष्व दृढाभिमानं धत्स्व। अनुक्तान्यप्यङ्गकरणान्यत्रोक्त्वा तत्प्रवणीकुर्वन्नुपसंहरति *किमत्रेति* ॥ ३७॥३८ ॥

रमन्तां प्रणवे दिव्ये न तु मन्त्रान्तरे भ्रमात् ॥
इदं व्याप्तं यतस्तेन ब्रह्मरूपेण सर्वशः ॥ ३९ ॥

मन्त्रान्तरे कुतो न रमन्तामित्राह—*इदमिति* इदं शब्दार्थात्मकं सर्वं जगत्, यतः शब्दार्थब्रह्मरूपेण तेन प्रणवेन शङ्कुना पर्णमिव रज्वा सर्प इव च व्याप्तम्, अतः सर्वमन्त्रतदर्थतत्फलानां प्रणवतदर्थयोरन्तर्भावादित्यर्थः ॥ ३९ ॥

इत्यवोचमहं विप्रा ! अङ्गस्तुतिमनुत्तमाम् ॥

इतिशब्दः अङ्गस्तुतिसमाप्तिद्योतनार्थः ॥ इत्यङ्गस्तुतिः ॥

पूर्वकृतैः पापैर्मा अङ्गस्तुत्या सम्पादिता अङ्गानां प्रणवैकप्रवणता विघाति मेऽङ्गानि सुरक्षितानि तिष्ठन्त्वित्यङ्गस्तुत्यनन्तरं कवचं वक्तुं प्र-

तिजानीते—

सूत उवाच—

अथातः सम्प्रवक्ष्यामि कवचं वज्रसम्मितम् ॥ ४० ॥

यस्य स्मरणमात्रेण मुच्यंते पातकैर्द्विजाः । ॥

कवचानां राजराजं शाश्वतम्मोक्षदं शुभम् ॥ ४१ ॥

*अथेति* वज्रेण सम्मितं तुलितम् अभेद्यमित्यर्थः ॥ ४० ॥ ४१ ॥

प्रणवकवचस्य ब्रह्मऋषिः । अनुष्टुप्छन्दः ।
परमात्मा देवता । अंबीजं । उं शक्तिः ।
मङ्कीलकं । अकारादिभिस्त्रिभिः कराङ्गन्यासः ।

ऋषिः कल्पादौ प्रथमं मन्त्रद्रष्टा । अनुष्टुप् अष्टाक्षरचतुष्पादा छादनाच्छन्दः । परमः सर्वोपाधिविनिर्मुक्तः आत्मा प्रत्यग्ज्योतिर्देवता मन्त्राराध्या । बीजं मन्त्रशरीरोपादानकरणम् बिन्दुः । शक्तिस्तद्धारणक्षेत्रं योनिः । कीलकं तदुभयसंधायकं लिङ्गम् । एवं त्रिपदस्य प्रणवस्य गुणत्रयात्मकमायात्मकबन्धमोक्षार्थं जपे विनियोगः । करपदेनाङ्गुष्ठाद्यो लक्ष्यन्ते, अङ्गपदेन शिरःशिखाकवचादयः । तेषु अं अङ्गुष्ठाभ्यां नमः ॥ उँ तर्जनीभ्यां नमः । मं मध्यमाभ्यां नमः । अं अनामिकाभ्यां नमः । उँ कनिष्ठिकाभ्यां नमः । मं करतलकरपृष्ठाभ्यां नमः । एवं हृदयन्यासं कुर्यादित्यर्थः ॥

ॐकारमाद्यं परमात्मरूपं संसारनाशे च समर्थमन्त्रम् ॥
अचश्वलं प्राप्यमजिह्मभक्तैर्ध्यायेत्सदा देशिकवाक्यमानात् ॥ १ ॥

*ॐकारमिति* ॥ आद्यं सर्वजगतां कारणम्, परमात्मनः शब्दब्रह्ममयं रूपं, परमात्मानं निरूपयति प्रकटयतीति वा परमात्मरूपम्, अत एव संसारस्य नाशे चकारान्निरतिशयानन्दप्राप्तौ च समर्थं मन्त्रम्, मणिमन्त्रौषधीनामचिन्त्यप्रभावः प्रसिद्धः, अजिह्मैः कौटिल्यादिसर्वदोषरहितैः राजंयमानित्वादिसर्वगुणयुक्तैरचंचलं परिहृतान्तर्बहिःकरणचापलं यथा स्यात्तथा प्राप्यम्, ॐकारं देशिकवाक्यमानात्साङ्गरहस्यं प्राप्य सदा ध्यायेदित्यर्थः ॥ १ ॥

न्यासं कृत्वा ततो ध्यात्वा कवचं प्रजपेत्सुधीः ।
ॐकारः पातु मूर्द्धानं सहस्रारेण शोभितम् ॥ २ ॥

यथोक्तं न्यासं कृत्वा ततो यथोक्तप्रकारेण ध्यात्वा, उच्चार्यमाणः सर्वं शरीरमूर्ध्वमुन्नयति ॐकारः सहस्रारेण पद्मेनब्रह्मरन्ध्रस्थेन शोभितं मूर्द्धानं पातु ॥ २ ॥

तारकं मे भ्रुवोर्मध्यमाज्ञाचक्रविराजितम् ॥
प्रणवः श्रोत्रयुग्मं च नेत्रयुग्मं प्रपञ्चगः ॥ ३ ॥

संसारमहाभयात्तारयतीति तारकम्, आज्ञाचक्रेण द्विदलपद्मेन विराजितं, मे भ्रुवोर्मध्यं पातु। ब्रह्म प्रणमयतीति प्रणवः। वैखरीभावे सर्वशब्दप्रपञ्चं व्याप्य तत्प्रतिपाद्य सर्वार्थप्रपञ्चगः ॥ ३ ॥

नासिकां नासिकाध्यक्षस्तालू पातु परात्परः ॥
चिबुकं सर्वदः पातु दन्तान्दानवनाशकः ॥ ४ ॥

नासिकासञ्चारात्प्राणात्मना नासिकाध्यक्षः। परात् कार्यब्रह्मणो परःसर्वं सर्वात्मकं ब्रह्म ददातीति सर्वदः। दानवानामसुराणामासङ्गपाप्मनां नाशकः ॥ ४ ॥

ओष्ठद्वयं सदा पायात्कण्ठं पातु ममाऽव्ययः ॥
भुजद्वयं भुवोऽध्यक्षः करौ पातु कराकृतिः ॥ ५ ॥

सदा सर्वकालं ओष्ठद्वयं पायात्। व्ययो उपक्षयस्तद्रहितत्वादव्ययः। भुवो भूमेरध्यक्षोऽधिष्ठाता। प्रसारिताङ्गुलिकथितस्याकारकरस्याकृतिरिव आकृतिर्यस्य, नागराक्षरे तथा कैश्चिदोङ्कारलेखनात्। सर्वशिल्परचनाहेतुत्वाद्वा कराकृतिः ॥ ५ ॥

कुक्षिं मे पातु सततं पृष्ठं पातुः पुमुत्तमः ॥
कुचद्वयं सदा रक्षेद्वेदान्तवनगोचरः ॥ ६ ॥

सततं शाश्वतं ब्रह्म। पुमुत्तमः पुरुषोत्तमः ॥ ६ ॥

नाभिं पातु नराकारो जघने परमेश्वरः ॥
गुह्यस्थानं गुह्यरूप ऊरू पातु स्वयंभवः ॥ ७ ॥

नराकारः पुरुषाकृतिः। गुह्यरूपः अतिरहस्यत्वाद्गोप्यरूपः। स्वयमेव परमार्थतो भवति नान्यादिति स्वयंभवः ॥ ७ ॥

अवाच्यो जानुनोर्मध्यं जङ्घे जम्भारिसेवितः ॥
पादद्वयं तथा विष्णुः पुनर्भवहरो नखान् ॥ ८ ॥

महिमेयत्तया तात्त्विकरूपेण च अवाच्यो वक्तुमशक्यः। नखान्पादनखान्सर्वनखान्वा ॥ ८ ॥

सर्वाण्यङ्गानि सर्वात्मा पातु वाग्गामनःप्रियः ॥
प्राचीनदेशतः पातु मामवाचीनदेशतः ॥ ९ ॥

वाणीप्रियः प्राचीनदेशतः, मनःप्रियः अवाचीनदेशतः, पात्विति परे णान्वयः ॥ ९ ॥

प्रतीचीनप्रदेशाच्च पायात्प्रत्यक्सरूपकः ॥
उदीचीनप्रदेशाच्च पातु मां मनुजेश्वरः ॥ १० ॥

प्राच्यवाचीप्रतीच्युदीचीशब्देभ्यः पूर्वदक्षिणपश्चिमोत्तरदिग्वाचिभ्यो भवार्थे अश्रूत्तरपदात्कः ॥ १० ॥

ऊर्ध्वाधोदेशतः पातु त्रिमूर्त्तिस्वस्वरूपकः ॥
पञ्चभूतात्मकः पातु पञ्चभूतानि भीतितः ॥ ११ ॥

कारणोपाधौ त्रिमूर्त्तिः ऊर्ध्वदेशतः, कार्योपाधौ स्वस्वरूपकः अधोदेशतः, पात्वित्यन्वयः ॥ ११ ॥

ज्ञानेन्द्रियाणि तद्रूपी कर्त्ता कर्मेन्द्रियाणि च ॥
परणामरीणां वर्गं च हिनस्तूर्मींश्च परमम ॥ १२ ॥

तद्रूपी ज्ञानेन्द्रियरूपी कर्त्ता, चकारात्कर्मेन्द्रियरूपी च कर्मेन्द्रियाणि पातु । स एव कामक्रोधलोभमोहमदमत्सराख्यानां परणामरीणां वर्गम्, अशनायापिपासाशोकमोहजरामृत्युसंज्ञाः षडूर्मीश्च हिनस्तु नाशयतु॥१२॥

षड्भावविकृतीर्मे च द्वन्द्वदुःखानि सर्वशः ॥
हिनस्तु, सप्तधातूंश्च निरोगान् स करोति च ॥ १३ ॥

स एव प्रणवो मम 'जायते अस्ति वर्द्धते परिणमते अपक्षीयते नश्यती'ति यास्कोक्तषड्भावविकृतीः, शीतोष्णहर्षविषादादिद्वन्द्व दुःखानि सर्वदेशेषु सर्वकालेषु सर्वनिमित्तेभ्यश्च प्राप्तानि हिनस्तु, त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राख्यान् सप्तम्यधातून्वैषम्यनिवारणेन निरोगान्करोति॥१३

व्याघ्रचोरादिभीतेश्च पातु मां तत्तदाकृतिः ॥

सूत उवाच—

मार्गभीत्या शत्रुभीत्या चोरभीत्या च कम्पतः ॥ १४ ॥
इदं च कवचं जप्त्वा मुच्यते भीतितस्ततः ॥
व्याघ्रादिप्रबलग्रस्तो जपान्मुक्तिमवाप्नुयात् ॥ १५ ॥

तत्तदाकृतिर्व्याघ्रचोराद्याकारस्तन्निवर्त्तकाकारो वा, मार्गभीत्या प्रान्तरकान्तारादिषु संभावितव्याघ्रसर्पदावाग्न्यादिभीत्या, कंपितः उद्विग्नः, इदं कवचं जप्त्वा ततो भीतितो मुच्यते इति परेणान्वयः ॥१४॥१५॥

आमुष्मिकमपि फलं महत्तममित्याह—

जपित्वा कवचं नूनं तरन्ति भवसागरम् ॥
कवचेन युतो राजा शत्रूनिव दुरासदान् ॥ १६ ॥

*जपित्वेति* कवचेन युतः पुरुषो राजेव दुरासदान् शत्रूनपि तरतीति विपरिणामेन योज्यम् ॥ १६ ॥

तस्मात्पठन्तु सततं त्रिषु कालेषु योगिनः ॥
ॐकारकवचं गौर्या इत्येवं शंभुरब्रवीत् ॥ १७ ॥

इति प्रणवकवचं समाप्तम् ॥

*तस्मादिति* ॥ योगिनः यतयः । इत्येवं अनेनाभिप्रायेण, शंभुः गौर्यै ॐकारकवचमब्रवीदित्यन्वयः ॥ १७ ॥

इति प्रणवकवचव्याख्या समाप्ता ॥

अथातः संप्रवक्ष्यामि प्रणवब्रह्मणो द्विजाः ! ॥
हृदयं सर्ववेदानां सारभूतं भवापहम् ॥ १ ॥

अथ कवचानन्तरं प्रणवार्थस्यावश्यानुसन्धेयत्वात्, हृदयं परमरहस्यभूततात्पर्यार्थप्रतिपादकं ग्रन्थम् ॥ १ ॥

इदमेवाह—

ॐकारार्थो विशेषेण यत्र शक्योऽभिवीक्षितुम् ॥
अकारश्च उकारश्च मकारश्च सबिन्दुकः ॥ २ ॥

*ॐकारार्थ इति* ॥ तत्राध्यारोपापवादाभ्यां निष्प्रपञ्चं ब्रह्म प्रणवेन बोध्यते इति प्रदर्शयिष्यंस्तदर्थं तन्मन्त्रान् विभजते *अकारश्चेत्यादिना* ॥ २ ॥

नादः कलाशक्तिरर्धमात्राशान्तनवांशकः ॥
तेषामर्थं प्रवक्ष्यामि पार्थक्येन शुचिव्रताः ! ॥३॥

नवांशा अवयवा यस्य स तथोक्तः । तेषामकारादीनां नवानामंशानां पार्थक्येन प्रत्येकं क्रमेणार्थं प्रवक्ष्यामीत्यर्थः ॥ ३ ॥

तत्र वियदादिभूतपञ्चोत्पत्तितत्पञ्चीकृतक्रमेण ब्रह्माण्डादिचतुर्विधशरीरान्तसमष्टिस्थूलप्रपञ्चाध्यारोपेण तदुपहितं जागरितावस्थं ब्रह्म अकारांशार्थ इत्याशयेनाह—

प्रपञ्चो जायते यस्माच्चराचरविभागतः ॥

वर्णाश्रमादिभेदेन पशुपक्षिमृगादिकम् ॥ ४ ॥

*प्रपंच इत्यादिना, इत्याह प्रथम इत्यन्तेन*यस्मान्निमित्ताभिन्नोपादानात्, चरा जरायुजाऽण्डजस्वेदजाः, अचराः उद्भिज्जाः । तत्र धर्मज्ञानाधिकृतेषु वर्णाश्रमविभेदेन, तदनधिकृतेषु पशुपक्षिमृगादिकम् ॥४॥

रज्ज्वादेरिव सर्पादिरविद्याहेतुको मृषा ॥

मरौ मरीचिकानीरं यथैवं जायते जगत् ॥ ५ ॥

मृषात्वे हेतुः *अविद्याहेतुक इति* । सर्पादिश्चेतनाध्यासे दृष्टान्तः मरीचिकानीरमित्यचेतनाध्यासे ॥ ५ ॥

इत्याह प्रथम, स्तत्र प्रपञ्चो न च वास्तवः ॥

यावद्बाधं प्रमाणेन सर्पादेर्जीवनं यथा ॥ ६ ॥

वस्तुतः सूक्ष्माण्येव पञ्चभूतानि पञ्चीकरणोपाधिना अविवेकात् स्थूलताभ्रान्त्या गृहीतानि विवेकदृष्ट्या पर्यालोचने तन्तुदृष्ट्या पर्यालोचने ततो व्यतिरिक्तः पट इव न स्थूलं नाम किञ्चिदस्ति, तथा च श्रुतिः—'यदग्ने रोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं, वाचारम्भणम् विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यमिति । एवञ्च सूक्ष्मभूतानि तत्कार्यं समष्टिव्यष्टिलिङ्गशरीरोपहितं तद्व्यवहारस्वभावस्थं ब्रह्म उकारार्थांश इत्याशयेनाह *तत्र प्रपञ्च इत्यादि, तद्द्वितीयोऽपीत्यन्तेन* प्रपञ्चः-स्थूलप्रपञ्चः । ननु स्थूलप्रपञ्चस्यावास्तवत्वे प्रत्यक्षादीनां कर्मकाण्डश्रुतीनां च कथं प्रामाण्यं तत्राह *यावद्बाधमिति* यावद्बाधं प्रमाणभूतेन प्रत्यक्षादिना सिद्धमिति शेषः ॥ ६ ॥

एवं जीवति विश्वं च दृष्ट्वा मोहान्धचक्षुषाम् ॥

सृषा (दृष्टा)

इत्याह तद्द्वितीयोऽपि, जीवनं न च वास्तवम् ॥ ७ ॥

अप्यर्थे चः, यथा अध्यस्तरज्जुसर्पादेर्मोहान्धचक्षुषां दृष्टा कल्पितं जीवनं भयकम्पपलायनाद्यर्थक्रियासमर्थम् एवं विश्वमपीत्यर्थः । एवं च अयस्कान्तसन्निधिमात्रेण अयसि स्पन्दनमिवाधिष्ठानब्रह्मचैतन्यसन्निधानेन मायागुणानां सत्त्वादीनां प्रकाशस्पन्दावरणार्थक्रियापरिणतिव्यापारपरस्परैव परस्परमेदतारतम्यवैचित्र्येण सूक्ष्मस्थूलजगद्विवर्तात्मना प्रथते न गुणमयमायाशबलचिद्व्यतिरिक्तं जगन्नाम किञ्चिदस्तीति मकारांशार्थं इत्याह *जीवनमित्यादि, तृतीयोऽपीत्यन्तेन* जीवनं स्थूलसूक्ष्मप्रपञ्चसत्ता ॥ ७ ॥

अयसः संनिधानेन तन्मणेश्चलनं यथा ॥
तथाऽविद्यापि चलति जगद्धेतुत्वकारणम् ॥ ८ ॥

तन्मणेः अयःस्कान्तमणेःसन्निधानेन अयसः यथा चलनम्, तथा चित्सन्निधानेन अविद्यापि चलति, तच्चलनमेव ब्रह्मणो जगद्धेतुत्वारोपे कारणमित्यर्थः ॥ ८ ॥

निश्चले निर्विकारे च यथा संसार इष्यते ॥
इत्याह तत्तृतीयोऽपि, अविद्या न च वास्तवी ॥ ९ ॥

एतावांस्तु विशेषः—यदयश्चलनं मणौ नेष्यते, अविद्यायाः स्पन्दपरिणामोभयरूपः संसारस्तु निश्चले निर्विकारेऽपि ब्रह्मणि आरोपदृष्ट्या इष्यते, तथाचाविद्यामात्रमेवालातचक्रवदेव जगद्भावेन भासते न ततोऽन्यत्किञ्चिदिति ज्ञानेनाऽविद्याबाधे संसारबाधसिद्धिरिति मकारांशार्थं इत्याह *इत्याहेति* ॥ इदानीमविद्याशबलात्पृथक्कृतम् अविद्यातत्कार्यबाधेऽप्युपाध्या शोधिततत्त्वपदार्थरूपमधिष्ठा नचिन्मात्रं बिन्द्वंशार्थं इति दर्शयति *अविद्या नचेत्यादि, तच्चतुर्थोऽपीत्यन्तेन* ॥ ९ ॥

ननु तत्त्वज्ञानेन शबलान्तर्गताविद्यांशस्येव निरंशस्यापि बाधः किन्न स्यात्तत्राह—

ब्रह्म बिम्बात्मकं सत्यं जगन्नेतरदीदृशम् ॥
अधिष्ठानमबाध्यं स्यादधिष्ठेयस्य बाध्यता ॥ १० ॥

ज्ञानं हि सत्यार्थावलम्बनबलेन मिथ्याभूतमेव बाधते *ब्रह्मेति* ॥ सत्यस्य बाध्यत्वायोगादित्यर्थः। सत्यत्वे हेतुगर्भविशेषणम् *बिम्बात्मकमिति* यथा बिम्बप्रतिबिम्बभेदाधाराधिष्ठानं मुखं न भेदवन्मिथ्या, तथा जीवेश्वरभेदकल्पनाधिष्ठानं ब्रह्मापि न मिथ्येत्यर्थः। ब्रह्मण इतरज्जगत्तु न ईदृशं न सत्यम् सत्यान्यत्वादेवेत्यर्थः ॥ फलितमाह *अधिष्ठानमिति* ॥ अधिष्ठेयस्य आरोप्यस्य ॥ १० ॥

रज्ज्वादिरिव सर्पादेः सर्वाधारः परेश्वरः ॥
इत्याह तच्चतुर्थांऽपि, आधारत्वं न वास्तवम् ॥ ११ ॥

सर्वाधारः सर्वस्य वियदादेरवस्थात्रयस्य च आधारः अधिष्ठानम्, परेश्वरः परब्रह्म, शोधितत्वंपदलक्ष्यार्थत्वमखण्डैकरससच्चिदानन्दरूपवाक्यार्थो नादांशार्थं इत्याह *आधारत्वमित्यादि, तच्चमस्येत्यन्तेन* वियदादेरवस्थात्रयस्य च आधारत्वमधिष्ठानत्वमपि अधिष्ठेयमिथ्यात्वे न वास्तवम्, नहि पुत्राभावे वन्ध्या तन्माता न भवति ॥ ११ ॥

ब्रह्म सत्यं जगन्मिथ्या भेदो न ब्रह्मजीवयोः ॥
ईश्वरः संसरत्येवं जीवरूपेण जन्तुषु ॥ १२ ॥

यदा दर्पणस्थानीयं भेदकोपाधिभूतं जगन्मिथ्या उभयत्राप्यधिष्ठानं ब्रह्मैव सत्यं, तदा निरुपाधिमुखस्येव ब्रह्मजीवयोरपि भेदो नास्ति। यदाप्ययं संसारीवाऽभूत्तदापि जन्तुषु चतुर्विधभूतजातिषु ईश्वरो मायोपहित एव जीवरूपेण संसरति मायाकार्योपाधीनां कारणानन्यत्वादुपहितभेदासिद्धेः ॥ १२ ॥

यदा राजभोगसम्पन्नः सुखशय्याशयानो राजैव परितः परिखेदैः पद्महिष्या च चामरव्यजनपादसंवाहनादिभिः सेव्यमानो राजरूपेण भोगी स्वात्माज्ञानपरिकल्पितभिक्षुकश्च स एव भवतीति उपाधिसद्भावदशायामपि न वास्तवैकत्वविरोधः, ततो दूरे उपाधिबाधदशायां तत्सम्भानेत्यखण्डैक्यमव्याहतमित्याशयेनाह—

राजरूपेण भोगी च भिक्षुरूपेण भिक्षुकः ॥
इत्याह पञ्चमस्तत्र, जीवरूपं न वास्तवम् ॥ १३ ॥

*राजरूपेणेति* ॥ त्वंपदलक्ष्ये ब्रह्मभावसाक्षात्कारज्ञानेन सप्रपञ्चजीवभावबाधे सर्वानर्थनिवृत्तिरूपः परमपुरुषार्थः सिद्ध इति कलांशार्थ इत्याशयेनाह *तत्र जीवरूपमित्यादि, षष्ठ इत्यन्तेन* ॥ १३ ॥

यदा चन्द्रतत्कलानां व्यावहारिके अवयवावयविभावे सूर्यतत्करणानां संस्थानस्थानभेदेऽपि सति अमृततेजःस्वभावौ न भिद्येते तदा निरवयवसंस्थाननिष्प्रदेशचिन्मात्रस्वभावे उपाध्यपगमे क्व भेदानर्थसम्भावनेत्याशयेनाह—

चन्द्रात्कला न भिद्यन्ते सूर्यादिव च भानवः ॥
तथा जीवा न भिद्यन्ते ब्रह्मणश्च उपाधितः ॥ १४ ॥

*चन्द्रादिति* ॥ १४ ॥

नन्ववत्साधेनुरानीयतामित्यत्र वत्सनाश इव कार्यकारणोपाधिनाशावेव जीवब्रह्मणोर्भेदकोपाधी स्याताम्, यथाहुः—'संवर्गवह्निप्रयोगोऽविशेषगतिहेतुरि'ति, तत्राह—

उपाधिनाशे नोपाधिस्तत्र यत्नस्ततो महान् ।
इत्याह षष्ठ,स्तत्रापि जीवभेदो न वास्तवः ॥ १५ ॥

*उपाधिनाश इति* । उपाधिनाश उपाधिर्न भवति घटाकाशभेदकघटोपाधिनाशस्याकाशभेदकत्वादर्शनात् मुखभेदकदर्पणोपाधिनाश-

स्य मुखभेदकत्वाद्दर्शनाच्चन्द्रभेदकतिमिररोगनाशस्य चन्द्रभेदकत्वाद्दर्शनाच्च, यत्सतन्नाशौ हि न धनुभेदकोपाधी किन्तु जातिप्रयुक्तभेदस्य परिचायकौ, न चात्रोपाधिव्यतिरिक्तं भेदप्रयोजकं किञ्चित्केनचिद्वक्तुं शक्यम् असङ्गमायाव्यतिरिक्तस्योपाधिकल्पकस्य वादिभिः दुर्निरूपत्वाद्भावस्य प्रतियोगितदवच्छेदकभेदसिद्ध्यधीनभेदतया निरुपाख्यतया च स्वभेदसिद्धावप्यसमर्थस्य स्वाश्रयभेदोपाधितया दूरनिरस्तत्वाच्चोपाधिनाशस्य भेदकोपाधित्वसाधने प्रवृत्तस्य तव वृथैव महान् यत्नः परिश्रमो भवेदित्यर्थः । तत्रैतच्छक्यं वक्तुम्—न वाक्यार्थसाक्षात्कारेणाविद्यानिवृत्तौ आत्यन्तिकसर्वोपाधिनिवृत्तिः शक्या प्रतिज्ञातुं तत्त्वज्ञजीवनाभावप्रसङ्गेन ब्रह्मविद्यासम्प्रदायप्रवर्त्तकाभावप्रसङ्गात् जीवन्मुक्तिशास्त्रविरोधप्रसङ्गात्, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ' इत्यादिश्रुतिकोपात् प्रारब्धकर्मशेषवैयर्थ्यात् 'भोगेन त्वितरे क्षपयित्वा सम्पद्यत' (ब्र० सू० ४।१।१९) इति सूत्रविरोधाच्चेति तत्परिहारेण जीवन्मुक्तिदशायां (न) ब्रह्मतत्त्वसमर्थनार्थः शक्त्यंश इत्याह *तत्रापीत्यादि, सप्तमीत्यन्तेन* । तत्र तस्यामविद्यातत्कार्यबाधदशायामपि जीवन्मुक्तिव्यवहारभासार्थमभ्युपगम्यमानो जीवभेदो न पूर्ववद्वास्तवः सत्यकामकर्मवासनारूपजन्मबीजोत्पादनसमर्थ इति यावत् ॥ १५ ॥

तत्कुतस्तत्राह—

स्थूलसूक्ष्मादिदेहेषु दग्धेषु ज्ञानवह्निना ॥

दग्धवस्त्रमिवाभासशक्तिरेकाऽवशिष्यते ॥ १६ ॥

*स्थूलेति* । आभासो बाधितजगदाकारप्रतिभासस्तच्छक्तिरेकैव प्रारब्धशेषभोगायाऽवशिष्यते न जगद्रूपमणुमात्रमपीत्यर्थः । तत्र बुध्यारोहायानुरूपं दृष्टान्तमाह *दग्धवस्त्रमिवेति* ॥ १६ ॥

तथाऽऽभासः प्रतीयेत यथापूर्वं च संस्मृतिः ॥

इत्याह सप्तमी तत्र, आभासो न च वास्तवः ॥ १७ ॥

ननु यथा दग्धपटे पटाकारं प्रतियन्तोऽपि प्रेक्षावन्तो न प्रावरणपरिधानाद्यर्थं तत्र प्रवर्तन्ते यथा पूर्वं मदीयः पटोऽयं शीतनिवारणादिक्षम इति संस्मृत्यभावात्तथा जीवन्मुक्तावपि पटादि नाद्रियुरित्याशंक्याह *यथापूर्वं चेति* । ज्ञानबाधितस्यापि प्रपञ्चस्य प्रारब्धभोगार्थत्वाद्व्यवहारार्थंक्रियाप्रतिभाससामर्थ्याबाधाद्यावज्जीवं यथापूर्वं संस्मृतिश्चकाराद्व्यवहारो भोगश्च सिद्ध्यतीत्यर्थः । तस्यां च दशायां जीवन्मुक्तैः 'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकात्मके जगत्यर्थं अस्तिभातिप्रियमित्यंशत्रयं ब्रह्म-

३ प्रणव

त्मनैव मीयते तत्त्वतो ज्ञायते, नामरूपमित्यर्द्धांशो यथापूर्वं भ्रान्त्यैव प्रतीयते न याथार्थ्येन मीयत इति तद्दृष्ट्युपहितं ब्रह्म अर्द्धमात्रेत्युच्यते इत्यर्द्धमात्रांशार्थं इत्याह *तत्राभास इत्यादि, अष्टमी यत इत्यन्तेन* ॥१८॥

जीवन्मुक्तिदशां प्राप्य स्वानन्दमनुभूय च ॥

अर्द्धं च मीयते यस्मात् ब्रह्माभिन्नं च सर्वशः ॥ १८ ॥

यतः अंशपञ्चकमध्ये नामरूपात्मके आभासांशो न वास्तवः प्रमाविषयः सच्चिदानन्दस्तु वास्तवः अन्यांशो भ्रान्तिमात्रसिद्धः, यतश्च जीवन्मुक्तिदशां प्राप्य वास्तवं स्वानन्दमनुभूयं स्थितेनैतत् ब्रह्माभिन्नमर्द्धमेव मीयते तस्मादर्द्धमात्रेति सा प्रोक्तेति परेणान्वयः ॥ १८ ॥

अभावस्तस्य विज्ञानमहिम्नाऽनुमितिर्भवेत् ॥

अर्द्धमात्रेति सा प्रोक्ता प्राहैवं चाष्टमी यतः ॥ १९ ॥

विज्ञानमहिम्ना तु सर्वशः सर्वनामरूपांशश्च अभावो बाधश्च परमार्थतो ब्रह्माभिन्नमधिष्ठानमात्रमिति दृढनिश्चयो भवेत्, अतः सा मात्रा अर्द्धमात्रेति प्रोक्तेति स्वनामनिर्वचनरूपमष्टमीमात्रा एवं प्राहेत्यर्थः ॥१९॥

शान्ताख्यो नवमोऽशस्तु मुक्तानां संन्यासिनां निर्विकल्पसमाधौ विदेहकैवल्ये च प्रथमानं शान्तसर्वप्रपञ्चपरमपुरुषार्थभूतं निरतिशयानन्दभूमाख्यं स्वरूपमाहेत्याह—

कर्मणां न्यायतो न्यासे स्थूलसूक्ष्मादिदेहके ॥

नष्टे जन्मान्तराभावे गुरुवेदान्तमानतः ॥ २० ॥

व्यतिरिक्तं जगत्स्वस्माद्यतो नास्ति ततः स्वयम् ॥

शान्तं निर्मलमाकाशं नित्यानन्दं च सर्वगम् ॥ २१ ॥

स्वे महिम्नि च संसिद्धं पर्यवस्यति केवलम् ॥

नात्र भेदो न चाकारो न विकल्पो न कल्पना ॥ २२ ॥

*कर्मणामित्यादि, नवमस्तेनेत्यन्तेन* । विहितानां कर्मणां न्यायतो विहिते न्यायेनैव संन्यासे कृते गुरुवेदान्तमानतो जातेन तत्त्वसाक्षात्कारेण स्थूलसूक्ष्मकारणदेहके नष्टे सति बीजाभावादेव जन्मान्तराभावे सति ऐहिकमामुष्मिकं च जगद्यतः स्वतो व्यतिरिक्तं नास्ति, ततः स्वयं यतिः शान्तं नित्यानन्दं सर्वाङ्गपूर्णं स्वे महिम्नि स्वतःसिद्धं निर्मलमाकाशं सर्वतः स्वप्रकाशं केवलब्रह्मैव पर्य्यवस्यतीति सार्द्धद्वयार्थः ॥२०॥२१॥२२॥

तत्र शान्तशब्दप्रवृत्तिनिमित्तानि प्रपञ्चयति *नात्रेति*

न किञ्चिन्नैव किञ्चिच्च सिद्धमद्वैतमुत्तमम् ॥
इत्याह नवमस्तत्र ततः श्रद्धत्स्व शौनक ! ॥ २३ ॥

न किञ्चिदिति द्वैतनिषेधे तदभावपरिशेषमाशंक्य *ननु किञ्चिदिति* तस्याप्यधिष्ठानव्यतिरिक्तस्य प्रतिषेधार्थं तत्र तासां नवांशानां मध्ये नवमोंऽश इत्याह वर्णितप्रणवार्थः ॥ श्रद्धधानैरेव सुबोधो नान्यैरित्याशयेन तद्भक्ततया श्रद्धां विधत्ते *तत इति* ॥ २३ ॥

ज्ञात्वेदं गुरुमूलेन नानावेदान्तसंग्रहम् ॥
मुच्यते जन्मपाशेन नरो नात्रास्ति संशयः ॥ २४ ॥

नानावेदान्तानां तात्पर्यसङ्ग्रहरूपमिदं प्रणवहृदयं गुरुमूलेन गुरुप्रधानेन श्रवणादिना ज्ञात्वा नरो जन्मपाशेन।मुच्यते, अत्र संशयो नास्ति संशयो न कार्य इत्यर्थः ॥ २४ ॥

शिखां सूत्रं च गायत्रीं गृहं दारान्कुमारकान् ॥
परित्यज्य जपन्नेतं प्रणवं साङ्गमुत्तमम् ॥ २५ ॥
ॐकारहृदयं गौर्या(मे) इत्येवं शम्भुरब्रवीत् ॥
इति प्रणवहृदयम् ॥

प्रणवहृदयज्ञानप्रधाने प्रणवजपे परमहंसपरिव्राजकानामेवाधिकार इति दर्शयति *शिखामिति* ॥ २५ ॥

ॐ कारहृदयमित्युपसंहारः ।

इति प्रणवहृदयव्याख्या समाप्ता ॥

सूत उवाच—

साङ्गं प्रणवमाजप्य पुरश्चर्यां ततश्चरेत् ॥
दशलक्षं जपः प्रोक्तस्तदूर्द्ध्वं होम उच्यते ॥ १ ॥

नित्यं प्रणवजपनिष्ठस्य तत्पुरश्चर्याप्रकारं संक्षिप्याह *साङ्गमित्यादिना* प्रजप्य किञ्चित्कालं जप्त्वा, स्पष्टम्(१) ॥ १ ॥

तर्पणं स्यात्तदूर्द्ध्वं च सहस्रं द्विजभोजनम् ।
एवं कृत्वा सनियमं प्रणवात्मा प्रसीदति ॥ २ ॥
किमत्र बहुनोक्तेन प्रणवेन तुला न हि ॥

(१) अन्यदिति शेषः ।

गायन्ति श्रुतयः सर्वा जपन्ति मुनयस्तथा ॥ ३ ॥

सनियमं पयःफलसक्तुपावकभिक्षाशनस्थण्डिलशयनादिसर्वपुरश्चर्याङ्गनियमसहितम्, एवं पुरश्चरणं कृत्वा स्थितस्य पुंस इति शेषः, प्रणवस्वरूप आत्मा प्रसीदति पापदुर्वासनादिकालुष्यं हित्वा प्रकाशत इत्यर्थः। सगुणनिर्गुणब्रह्मप्रसादे अन्तरङ्गसाधनेष्वन्येषां साधनानां प्रणवेन तुला न हीत्यर्थः। श्रुतयः सर्वाः—'ॐ मिति ब्रह्म। ॐ मिति सर्वं। एतद्वै सत्यकाम परञ्चापरं च ब्रह्म यदोङ्कारो, रसानां रसतमः परार्ध्यः ओमित्येतदक्षरमिदं सर्वमित्याद्याः। मुनयः व्यासवसिष्ठसनकाद्याः ॥३॥

तिष्ठन्त्वन्ये गुणाः साक्षात्परब्रह्मतत्त्वस्य सर्वप्रपञ्चबाधेन करतलामलकवदपरोक्षतया प्रतिपादकत्वमेवास्य सर्वोत्कर्षं ख्यापयतीत्याह—

वाच्यं ब्रह्म परं वस्तु महिमा केन वर्ण्यते ॥

शुकादयोऽपि यं जप्त्वा मोक्षमापुर्निरत्ययम् ॥ ४ ॥

*वाच्यमिति*। ये ये प्राक् मुक्तास्ते सर्वं प्रणवप्रभावादेवेत्याह *शुकादय इति* निरत्ययं पुनरावृत्तिरहितम् ॥ ४ ॥

सर्वोपासनासत्कर्मफलावाप्तिरपि अकाराद्यवयवैः सर्ववाग्व्यापिनः प्रणवस्यैव सामर्थ्यादित्ययमेवैकः सर्वपुरुषार्थसिद्धिहेतुरित्याशयेनाह—

लौकिकी वैदिकी वाक्च व्याप्ता येन पलाशवत् ॥

इत्यवोचमहं सर्वं यत्पृष्टं मुनिसत्तमैः ॥ ५ ॥

*लौकिकीति* पलाशवत् वृन्तेन पत्रवत्। 'तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाग् सन्तृण्णेति श्रुतेरिति भावः। मुनिसत्तमैः भवद्भिर्यत्पृष्टं तत्सर्वम् इति वर्णितप्रकारेणावोचमित्युपसंहारः ॥ ५ ॥

एवं सरहस्यं महामहिमप्रणवस्वरूपं श्रुत्वा कृतकृत्याः सन्तुष्टाः मुनयः स्वं सूतं च प्रशंसन्ति—

मुनय ऊचुः—

अहो भाग्यमहो भाग्यमहो फलमहो फलम् ॥

पिता त्वं मुनिधौरेय सूत ! त्वन्मुखसागरात् ॥ ६ ॥

*अहोभाग्यमित्यादिना* अनन्तजन्मसञ्चितसुकृतं परिपक्वभाग्यम्। तत्फलं तत्त्वज्ञानम्, अहो इत्याश्चर्यं, कल्पितात्मनः शरीरस्य संपादयिता यदि पिता तर्हि पारमार्थिकस्य परमात्मनः उपदेशेन संपादयिता त्वं कथं

न पितेति भावः । सर्वमुनीनामुपदेशधुरं वहतीति मुनिधौरेयः 'धुरो यड्ढकाविति' ( पा० अ० ४ पा० ४ सू० ७७ ) ढक् ॥ ६ ॥

ॐ कारकल्पमौक्तेयमणिं वध्वा वयं मुदा ॥
स्वकीयकण्ठदेशेषु धारयामः प्रसादतः ॥ ७ ॥

ॐ कारकल्पलक्षणो मौक्तेयौ मुक्तानायको मणिस्तं वयं स्वकीयकण्ठदेशेषु बद्ध्वा त्वत्प्रसादतो धारयामः ॥ ७ ॥

भासा तस्य तमो नष्टं हृदयस्थं तपोधन ! ॥
इत्युक्त्वा मुनयः सर्वे नेमुः सूताख्यदेशिकम् ॥ ८ ॥

तस्य मणेर्भासा तात्पर्यार्थप्रकाशलक्षणप्रभया हृदयस्थमज्ञानं तमो नष्टम्, नेमुर्नमश्चक्रुः ॥ ८ ॥

पठन्तु शृण्वन्तु च वाचयन्तु लिखन्तु गायन्तु च बोधयन्तु ॥
ॐ कारकल्पं मुनिवृन्दसेव्यं सूतोक्तमीशोक्तमनिन्दितं च ॥ ९ ॥

इति श्री स्कन्दपुराणे वैष्णवसंहितायां यन्त्रप्रस्तावे
प्रणवकल्पे प्रथमोऽध्यायः ॥ १ ॥

आदौ ईशोक्तं तथा सूतोक्तम्, न विद्यते निन्दितं जन्ममरणादिदुःखं यस्मात्तदनिन्दितम् ॥ ९ ॥

इति प्रणवकल्पप्रकाशे प्रथमोऽध्यायः ॥ १ ॥

सर्वात्मकत्वादनन्तनामकस्य प्रणवस्य सारभूतान्यष्टोत्तरशतनामान्याचिख्यासुः सूतस्तदनुरूपमङ्गलाचरणरूपां तद्भूमिकां रचयति—

प्रणवः परमं ब्रह्म प्रणवः परमः शिवः ॥
प्रणवः परमो विष्णुः प्रणवः सर्वदेवताः ॥ १ ॥

प्रणव इति परमस्य ब्रह्मणः प्रतिपादकत्वात्प्रतीकत्वाच्च परमं ब्रह्म, एवं परमस्य शिवस्य ब्रह्मविद्याशरीरस्य शुद्धचिन्मात्रस्य वाचकत्वात्प्रतीकत्वाच्च परमः शिवः, एवं सर्वजगदुपादानमायाशक्तिशरीरस्य चिन्मात्रस्य वाचकत्वादिना परमो विष्णुः, ततो हिरण्यगर्भादिसर्वदेवतात्मना अभिव्यक्तकार्यब्रह्मणो वाचकत्वादिना सर्वदेवताः ॥ १ ॥

मुनय ऊचुः—

सूत सूत महाभाग व्यासशिष्य महामते ! ॥
यस्य देवस्य नामानि लोकेषु मुनिसत्तम ! ॥ २ ॥

सूतसूतेत्याद्यर्थं द्विर्वचः, लोकेषु प्रख्यातानीति शेषः ॥ २ ॥

प्रथमं नामभिर्यैस्तु सर्वदेवोऽभिपूज्यते ॥
सर्वदैवतवृन्दानां पूजने यानि नो वद ॥ ३ ॥
साधारण्येन सर्वज्ञ ! लोकानुग्रहकाङ्क्षया ॥

सूत उवाच—

नामानि यानि लोकेषु प्रणवस्य मुनीश्वरैः ॥ ४ ॥

सर्वेषां देवः सर्वदेवः, सर्वदेवतात्मकत्वाद्वा सर्वदेवः ईश्वरः अभिपूज्यते, सर्वदैवतवृन्दानां प्रत्येकं पूजनेऽपि यानि नामानि साधारण्येन भवन्ति तानि नामानि लोकानुग्रहकाङ्क्षया नः अस्मभ्यं वदेति परेण सहान्वयः । सूतवाक्ये 'नामानि यानीत्या'दिर्मुनिपृष्टार्थस्यानुवाद उत्तरस्य पृष्टार्थैकनिष्ठताद्योतनार्थः ॥ ३ ॥ ४ ॥

कीर्त्यन्ते नामभिस्तैस्तु सर्वदैवतपूजनम् ॥
सर्वदेवात्मको यस्मात्प्रणवः परिकीर्तितः ॥ ५ ॥

यस्मात्प्रणवः सर्वदेवतात्मकः परिकीर्त्तितस्तस्मात्तैः प्रणवनामभिः सर्वदैवतपूजनं युक्तमित्यर्थः ॥ ५ ॥

अस्य श्रीप्रणवाष्टोत्तरशतनामस्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः, परमात्मा देवता, अनुष्टुप् छन्दः, अंबीजं, उं शक्तिः, मङ्कीलकं मोक्षार्थे जपे विनियोगः ।

ब्रह्मा ऋषिः इति परं ब्रह्मेत्यर्थः । यद्यपि पार्वत्यै शिवेनोपदिष्टत्वात्स एव ऋषिर्युक्तस्तथापि प्रणवस्य परब्रह्मऋषिप्रसिद्धेस्तन्नाम्नामपि स एव ऋषिः, शिवस्यापि परब्रह्मत्वेन ऋषित्वलाभादिति भावः ॥

ध्यानम्—

ॐ कारं प्रणवात्मबोधविलसत्प्राप्यं चिदानन्ददम्
सत्यं ज्ञानमनन्तमूर्त्तिममलं सिद्धात्मकं सर्वगम् ॥
प्रत्यञ्चं पुरुषोत्तमाब्जभवनं व्योमाभरोमावलिं
वाणीलक्ष्मिजगज्जनौ कुशलया गौर्या समेतं भजे ॥ १ ॥

*ॐकारमिति* । ॐकारकृतेनैव परमात्मबोधेनाविद्यावरणनिरासात्परमात्मभावेन विलसद्भिरधिकारिभिः स्वात्मतया प्राप्यम् । तथाविधस्वात्मदानेनैव चिदानन्दप्रदम्, स्वप्रकाशनिरतिशयानन्दप्रदम् । अनन्तमूर्त्तिमपरिच्छिन्नस्वरूपम् । सिद्धात्मकं स्वतःसिद्धं स्वसिद्धावन्यानि-

पेक्षमिति यावत् । सर्वगं सर्वाधिष्ठानम्, अत एव प्रत्यञ्चम्, क्षराक्षराती-
तत्वात् । पुरुषोत्तमं सर्वप्राणिहृदयाब्जभवनम् । अथवा पुरुषोत्तमो वि-
ष्णुः अब्जस्य चन्द्रस्य भवनमावासभूतो रुद्रः, अब्जं पद्मं भवनं स्थानं
यस्य स ब्रह्मा, एतेषां समाहारात्मा यः परमशिवस्तद्रूपम् । व्योमवन्नी-
रूपत्वाद्व्याप्तत्वाद्वा व्योमाभरोमावलिम्, अत एव वाणी च ई च ल-
क्ष्मीश्च तासां समाहारो वाणीलक्ष्मि, तस्य जगतश्च जनौ कुशलया गौ-
र्या परमशक्त्या समेतम्, ॐकारं भजे जपध्यानार्थविचारादिभिर्निरन्तरं
सेवेत्यर्थः ॥ १ ॥

एवं ध्यात्वा ततो भक्त्या नाम्नामष्टोत्तरं शतम् ॥
प्रणवस्य जपेद्विप्रः शुचिर्भूत्वा समाहितः ॥ २ ॥

समाहितः अव्यग्रचित्तः ॥ २ ॥

ॐकारस्तारकं सूक्ष्मं प्रणवः सर्वगोचरः ॥
दिव्यमेकाक्षरं शुभ्रं शुद्धं निर्मलमव्ययम् ॥ ३ ॥

उच्चार्यमाणः सर्वं शरीरमूर्ध्वमुन्नामयतीत्योंकारः । संसारमहाभया-
त्तारयतीति तारकम् । सूक्ष्मीभूय परशरीराण्यनुप्रविशतीति सूक्ष्मम् । ब्रह्म
ब्राह्मणेभ्यः प्रणामयतीति प्रणवः । सर्वगोचरः सर्वव्यापी । द्योतनस्वभावं
दिव्यम् । एकमेव न क्षरत्यश्नोतीति वा अक्षरम् । शुभ्रं शुभम् । अशुद्ध-
देहत्वनिरासित्वाच्छुद्धम् । अविद्यादिमलरहितत्वान्निर्मलम् । व्ययः अप-
क्षयस्तदभावादव्ययम् ॥ ३ ॥

सत्यो निरत्ययो देवो विश्वव्यापी प्रपञ्चगः ॥
विष्णुर्ब्रह्मा शिवो धाता विश्वकर्त्ता जगद्गुरुः ॥ ४ ॥

दीव्यति अ-
अबाध्यत्वात्सत्यः । अत्ययो नाशस्तद्रहितत्वान्निरत्ययः । दीव्यति वि-
श्वस्याश्रयेण सर्गादिना च क्रीडतीति देवः । विश्वव्यापनशीलत्वात् वि-
श्वव्यापी । स्वाध्यस्तं प्रपञ्चमधिष्ठानसद्रूपेणानुगच्छतीति प्रपञ्चगः ।
सर्वे देवा विशन्त्यस्मिन्निति विष्णुः । बृंहयति जगदिति ब्रह्मा । निरति-
शयानन्दत्वादनन्तकल्याणगुणनिधित्वाच्च शिवः । जगद्धारयति पोष-
यति चेति धाता । विश्वस्य कर्ता निर्माता । जगतः परमहितोपदेष्टृ-
त्वात् जगद्गुरुः ॥ ४ ॥

स्रष्टा पालयिता गोप्ता वेदकर्ताऽऽगमाकृतिः ॥
वेदान्तवेद्यो निलयं दैवतं भवनाशकम् ॥ ५ ॥

जगतः आदौ स्रष्टा । ततः पालयिता पोषयिता । गोप्ता उपघातकेभ्यो रक्षिता । वेदानां कर्त्ता कल्पादावाविष्कर्त्ता । आगमा रहस्यविद्यास्तत्कृतिः । वेदान्तैरुपनिषत्प्रमाणैर्वेद्यः । प्रलये निलीयतेऽस्मिन्जगदिति निलयम् । देवतानां समष्टिर्दैवतम् । भवनं भवः पुनर्जन्म तस्य नाशकं मूलोच्छेदकम् ॥ ५ ॥

अतःपरं मातृकावर्णक्रमेण यथासम्भवं अकारादिनामान्याह—

[३२] अकारादिक्षकारान्तमातृकावर्णवाचकः ॥

[३३] आलोचनतपःसिद्धजगदुत्पत्तिकारणम् ॥ ६ ॥

*अकारादीति* । अकारादिसर्वमातृकावर्णात्मना प्रकृतिप्रत्ययपदवाक्यमहावाक्याद्यात्मना सर्वार्थवाचक इत्यर्थः । 'तपसा चीयते ब्रह्म स तपोऽतप्यत, स तपस्तप्त्वा इदꣳ सर्वमसृजत' इत्यादिश्रुतिप्रसिद्धं यत् आलोचनात्मकं तपस्तावन्मात्रेण सिद्धस्य जगत उत्पत्तेराविर्भावस्य कारणम् ॥ ६ ॥

[३४] इनपावकवातेन्द्रमृत्युधावनकारणम् ॥

[३५] ईश्वरब्रह्मविष्णूनां रजःसत्त्वतमोभिदा ॥ ७ ॥

इनस्य सूर्यस्य पावकस्य वन्हेर्वातस्य वायोरिन्द्रस्य देवराजस्य मृत्योर्यमस्य च यद्भीत्या नियतकालं धावनं स्वस्वव्यापारे प्रवर्तनं तत्र प्रशासितत्वेन कारणम्,

भीषास्माद्वातः पवते भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥

इति श्रुतेरित्यर्थः । ईश्वरो रुद्रः ब्रह्मा विष्णुश्चेत्येतेषां यथोचितक्रमेण रजःसत्त्वतमोगुणैरुपाधिभिर्भिद्यत इति भिदा विभिन्ना या मूर्तिस्तद्रूप इत्यर्थः ॥ ७ ॥

[३६] उमावाणीविष्णुपत्नीशक्तिरूपेण संस्थितः ॥

[३७] ऊरुमस्तककर्णादिनानाङ्गविकलस्तथा ॥ ८ ॥

तेषामेव क्रमात् उमा पार्वती वाणी सरस्वती विष्णुपत्नी लक्ष्मीरिति प्रसिद्धा याः संहारसृष्टिपालनशक्तयस्तद्रूपेणापि संस्थितः । ऊरू मस्तकं कर्णौ चेत्यादिनानाविधैरङ्गैर्व्यवहरन्नपि वस्तुतोऽशरीरत्वात्तद्विकलः अशरीरः 'अपाणिपादो जवनो गृहीता' इत्यादिश्रुतेः ॥ ८ ॥

ॠक्षाप्रभृतिरोगाणामालयानालयाभिधः[३८] ॥

ॠपिवृन्दसहस्राणां ज्ञानमोक्षप्रदायकः[३९] ॥ ९ ॥

ॠक्षा अर्शो रोगः, तत्प्रभृतीनां रोगाणामालय आश्रयो देहस्तदात्म-
ना भ्रान्त्या प्रतीयमानोऽपि वस्तुतस्तदनालय इत्यभिधा श्रुत्यादिप्रसिद्धि-
र्यस्य, 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धमि'त्यादिश्रु-
तेः। सहस्रशब्द आनन्त्यपरः, स्वजपादिनिष्ठानां ॠपिवृन्दसहस्राणा-
मिह देहे ब्रह्मलोके वा ज्ञानस्य क्रमाक्रममोक्षस्य चोपासनापरिपाकतार-
तम्येन प्रदायकः ॥ ९ ॥

ॡक्षाविदुरभज्ञानसम्पन्नस्यापवर्गदः[४०] ॥

लुप्तलुम्पकलौपन्यत्रितयप्रतिपादकः[४१] ॥ १० ॥

ॡकारादिनाम्नो लोके अदर्शनात्सादृश्यात् ऌकारादि गृह्यते, ये
ॠकारादिनाम्नो लोके अदर्शनात्सादृश्यात् रूकारादि गृह्यते, ये
तपोनिर्जितरसनेन्द्रियत्वाद्रूक्षस्य भैक्षस्य रसं न विदुस्तेषु स्वार्थविज्ञा-
नसम्पन्नस्य सद्योऽपवर्गदः। ऌकारादिनाम्नोऽप्यप्रसिद्धेस्तत्सदृशलुका-
रादिनामनिर्देशः, लुप्तः नष्टः अतीतः, लुम्पको लोपकर्त्ता वर्त्तमानः, लोप-
न्यो लोपनार्हः भविष्यत्पदार्थः, एतत्त्रितयप्रतिपादकः सर्वार्थप्रकाशक
इति यावत् ॥

अथवा लुप्तो बाध्योऽविद्यादिस्तस्य लुम्पकश्चरमवृत्त्या रूढः परमा-
त्मा लौपन्यो लोपनकरणीभूतश्चरमसाक्षात्कारस्तत्त्रितयस्य प्रतिपा-
दकः प्रापक इत्यर्थः ॥ १० ॥

एलादिवासनायुक्तपानीयोत्थानलालसः[४२] ॥

ऐश्वर्याष्टकभूयिष्ठसिद्धापुरुपसेवितः[४३] ॥ ११ ॥

एला प्रसिद्धा आदिपदादुशीरकर्पूरादि, तद्वासनायुक्तस्य पानीय
स्योत्थाने सर्वसुकृतिनामुपभोगार्थोत्पादने लालसा वाञ्छा यस्य सः। ऐश्व-
र्याष्टकमणिमादिकं प्रसिद्धं, तद्भूयिष्ठैस्तत्प्रचुरैर्देवैः सिद्धैर्योगमन्त्रादि-
सिद्धैरापुरुषैः ईशत्पुरुषाकारैः किन्नरादिभिश्च सेवितः ॥ ११ ॥

ओंमादिनिखिलाम्नायमूर्द्धन्याम्नायबोधितः[४४] ॥

औन्नत्यगर्वसंनद्धदैतेयकुलघातकः[४५] ॥ १२ ॥

ओंकारादिभिर्निखिलानामाम्नायानां मूर्द्धनि भवैर्मूर्द्धन्यैर्महामन्त्रै-
राम्नायैश्च जपोपासनस्वाध्यायजन्यचित्तशुद्धिद्वारा तात्पर्यवत्प्रमाण-

४ प्रणव

तथा च तत्त्वतो बोधितः । औन्नत्यमैश्वर्यबलादुत्कर्षस्तत्प्रयुक्तेन गर्वेण युद्धाय सन्नद्धस्य दैतेयकुलस्य विष्ण्वादिरूपेण घातकः ॥ १२ ॥

अज्ञानतिमिरप्लुष्टजगदाभासदीपकः[४६] ॥
अः[४७] कंजजहरींद्रादिसर्वदैवतकारणम्[४८] ॥ १३ ॥

अज्ञानलक्षणेन तिमिरेणान्धकारेणाज्ञानेन तिमिरेण च प्लुष्टस्य दग्धप्रायस्य जगतः आभासे प्रकाशने बोधने च दीपकः । साक्षादनुस्वारादेर्नाम्नोऽत्यन्ताप्रसिद्धेरीषच्छ्रुतिसाम्येनाज्ञानेत्यादिनामोक्तिः । अः इतिविसर्गात्मकमेव नाम । अथ ककारादीनि नामानि । कञ्जाज्जातः कञ्जजो ब्रह्मा हरिर्विष्णुरिन्द्रादयश्चेति सर्वेषां दैवतानां कारणम् ॥ १३ ॥

कार्यकारणसंघातदेहावासमनोरथः[४९] ॥
खादिभूतादिभूतात्मा[५०] गम्यागम्यविचक्षणः[५१] ॥ १४ ॥

कार्याणां भौतिकानां कारणानां महाभूतानां च संघातरूपा ये व्यष्टिसमष्टिदेहास्तेषु स्वसृष्टेषु जीवभावेन प्रविश्य आवासे मनोरथो वाञ्छा यस्य सः । 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'त्यादिश्रुतेः । खं आदिर्येषां तेषां महाभूतानां आदिभूतः कारणत्वेन स्थितः आत्मा । चक्षुरादिप्रमाणगम्ये लौकिकविषये तदगम्ये अलौकिके धर्मब्रह्मविषये च करतलामलकवदसंदिग्धापरोक्षादिहेतुत्वाद्विचक्षणः ॥ १४ ॥

घर्मरश्मिप्रभाकर्त्ता[५२] बहिर्मुखपराङ्मुखः[५३] ॥
चराचरस्वरूपी[५४] च छेतृछेद्यादिदूरगः[५५] ॥ १५ ॥

घर्मरश्मेः सूर्यस्य प्रभायाः प्रकाशनशक्तेः कर्त्ता, "येन सूर्यस्तपति तेजसेद्ध" इत्यादिश्रुतेः । बहिर्मुखेष्वध्यात्मतत्त्वविचारविमुखेषु विषयासक्तजनेषु पराङ्मुखः । चराः जङ्गमाः, अचराः स्थावरास्तदात्मत्वाच्चरस्वरूपी । तथात्वे प्रसक्तं दोषं निवारयति *छेत्रिति* । आदिपदाद्दग्धृदाह्यक्लेदयितृक्लेद्यं भेत्तृभेद्यमित्यादिप्रपंचरूपं, तस्य दूरगः, अध्यस्तधर्माणामधिष्ठानास्पर्शित्वादिति भावः ॥ १५ ॥

जप्तृसाहस्र[५६]जप्य[५७]श्च झडितिप्रतिपादितः[५८] ॥
सर्वज्ञो[५९]ऽभिज्ञ[६०]विज्ञेय[६१]ष्टंकवास्यभिसाधितः[६२] ॥ १६ ॥

जप्तारः सहस्रमेव साहस्राः असंख्याता यतयो यस्य, सुलोप

च्छन्दसः, मुमुक्षुभिर्जपितुं योग्यो जप्यः वाचिकमानसजपार्हः। जप्यमा-
नेन स्वेनैव झटिति अविलम्बेनाऽऽविर्भूतब्रह्मात्मभावेन प्रतिपादितः
अनुभावितः। तथाप्रतिपत्त्या सर्वं स्वात्मतया जानातीति सर्वज्ञः । अभि-
रैरनुभवनिष्ठैरेव विज्ञातुं शक्यो विज्ञेयः। इमानि नामानि ङकारादिना-
मालाभात्पूर्ववत् । टङ्कः पाषाणदारणः, वाशी काष्ठतक्षणी ताभ्यां द्वैतबन्धं
विच्छिद्य मुक्तरूपेण साधितो न, किन्तु ज्ञानेनाज्ञानबन्धं विच्छिद्य नित्य-
सिद्धस्वरूपेणैव परिशेषितः इत्यर्थः ॥ १६ ॥

निष्ठुराकृतिसम्पृक्तो[६३] दम्भेतरविशेषितः[६४] ॥
ढक्कानिनादसम्पृक्तः[६५] प्राणित्राणपरायणः[६६] ॥ १७ ॥

ढकारादिनाम्नोप्यप्रसिद्धेस्तन्मध्यं नामाह *निष्ठुरेति* ॥ दृढतर-
संसारबन्धच्छेदे निष्ठुराकृत्या निर्दयाकारया चरमसाक्षात्कारवृत्त्या सम्पृ-
क्तः मिश्रितः । यतो दम्भेतरैः 'दम्भो दर्पोऽभिमानश्च'इत्यादिभगवद्दर्शिता-
सुरसम्पद्विलक्षणैः'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः'इत्यादिदैव-
सम्पद्भिर्विशेषितः समर्पितः । ढक्काऽत्र सकार्याविद्याविजययशःपटहस्त-
न्निनादसदृशैः 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्, अमृतस्य परं
सेतुं दग्धेन्धनमिवानलम्'इत्यादिश्रुतिभिः स्वतात्पर्योद्घाटनाय सम्पृक्तो
मिलितः । स्वोपासकादिप्राणिनां त्राणे परायणस्तत्परः ॥ १७ ॥

तरुणारुणसन्दीप्तजटामण्डलमण्डितः[६७] ॥
स्थाणुः[६८] कूटस्थलक्ष्मा[६९] च दानादानविचक्षणः[७०] ॥ १८ ॥

शिवरूपत्वात्तरुणारुणेन प्रतप्तकनकवत्सन्दीप्तेन जटामण्डलेन म-
ण्डितः । सर्वसंसारशाखास्कन्धच्छेदपरिशिष्टपुरुषाकृतित्वात्स्थाणुः ।
कूटमिव निर्विकारं स्थितस्वरूपमेव लक्ष्म स्वरूपलक्षणं यस्य । सृष्टिस्थि-
तिकालयोः सर्ववस्तुषु तत्तदर्थक्रियाशक्तीनां दाने प्रलयकाले उपसंहारेण
पुनरादाने च विचक्षणः ॥ १८ ॥

धनाधिपसमाराध्यो[७१] नक्षत्रोडुपमण्डनः[७२] ॥
पूज्यपूजकपूजा[७४] च फलरूपी[७५] फलात्मनाम् ॥ १९ ॥

धनाधिपेन कुबेरेण समाराध्यः । निशाकररूपेण नक्षत्रोडुपमण्डनः ।
पूज्यः पूजनार्हः । पूजकः पूजाकर्ता पूजा पूजनक्रिया तत्तद्रूप इत्यर्थः ॥
एवं काम्यकर्मानुष्ठानेन स्वर्गादि फलासक्त्या फलात्मनां फलरूपी ॥१९॥

विम्बिनीशतसम्पूज्यो[७६] भयाभयसुकोविदः[७७] ॥
मर्यादास्थापनाध्यक्षो[७८] यायजूकाभिवाञ्छितः[७९] ॥ २० ॥

ध्येयाकारप्रतिविम्बवत्पश्चिमवृत्तवृत्तयो विम्बिन्यस्तासां शतैर्ध्याव-यद्भिः संपूज्यः। बाह्ये द्वैताभिनिवेशस्तन्मूलमज्ञानं भयहेतुत्वाद्भयं ब्रह्मात्मै-क्यप्रतिष्ठा ह्यभयहेतुत्वादभयं तयोःपादशो विभागेन स्फुटम्प्रतिपादकत्वा-द्भयाभयसुकोविदः। 'भीषास्माद्वातः पवते, तत्त्वेव भयं विदुषोऽमन्वान-स्य'त्यादिश्रुतेः। अत एव जगन्मर्यादास्थापने अध्यक्षः स्वामी। यज्ञादि-साधनत्वात्तत्फलदत्वाच्च यायजूकैरभिवाञ्छितः ॥ २० ॥

रम्भावनविहारी च[८०] लावण्यकमनीयदः[८१] ॥
वन्दारुवन्दनीयश्च[८२] शङ्करो[८३] लोकवासिनाम् ॥ २१ ॥

यज्ञादिफलभोक्तृत्वरूपेण रम्भाद्यप्सरसां सम्बन्धिनि नन्दनादिवने विहारी। स्वर्गिणां लावण्यकमनीयं चन्द्रकलामयं शरीरं ददातीति लावण्यकमनीयदः। अत एव वन्दारुभिर्नतिस्तुतिपरैर्भक्तैर्वन्दनीयः नमस्-स्तुत्यश्च। स्वर्गादिलोकवासिनां तद्विषयभोगवृतितारतम्यानुसारेण मानुषानन्दादिहिरण्यगर्भानन्दान्तं शं सुखं करोतीति शङ्करः, 'एतस्यै-वानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः ॥ २१ ॥

षडाननजनौ हेतुः[८४] सङ्कल्पितपदार्थदः[८५] ॥
सर्वात्मा[८६] सर्वसंपद्दः[८७] सर्वसाक्षी[८८] च सर्वदः[८९] ॥ २२ ॥

शङ्करत्वादेव षडाननस्य स्कन्दस्य जनौ जन्मनि हेतुः। भक्तसङ्क-ल्पितधर्मार्थकाममोक्षपदार्थदः। ज्ञानिनां सर्वात्मा। सम्पदर्थिनां सर्व-सम्पदः। सर्वं साक्षात्पश्यतीति सर्वसाक्षी। सर्वं ददाति ददातीति वा सर्वदः ॥ २२ ॥

सर्वकर्त्ता[९०] सर्वभोक्ता[९१] सर्वेश्वरनियामकः[९२] ॥
सर्वभूतहृदावासः[९३] सर्ववस्तुस्वरूपकः[९४] ॥ २३ ॥

सर्वस्य कर्त्ता। सर्वस्य भोज्यस्य भोक्ता। सुरेश्वरनरेश्वरभुजगे-श्वरादीनां सर्वेषामीश्वराणां नियामको नियन्ता। सर्वेषां भूतानां प्राणि-नामात्मत्वात्सर्वभूतहृदावासः। सर्वनामरूपकल्पनास्पदत्वात्सर्वव-स्तुस्वरूपकः ॥ २३ ॥

हव्यकव्यादिभोक्ता[९५] च कृपालुजनशेखरः[९६] ॥

क्षितिनीराग्निपवनखसोमरविपुंकृतिः[९७-१०४] ॥ २४ ॥

दैवे यज्ञे हव्यानां पित्र्ये कव्यानाम्, आदिपदान्मानुषे हन्तकारान्नानां च भोक्ता । लकारादिनामदौर्लभ्यात्तदुपान्त्यं नामाह *कृपालुजनशेखर इति* । कृपालूनां जनानां शेखरः शिरोभूषणवच्छिरसा मान्यः परमकृपालुरित्यर्थः । क्षित्याद्यष्टमूर्तिरूपत्वात्क्षित्याकृतिरित्याद्यष्टौ नामानि समस्य निर्दिष्टानि । कृतिशब्दः आकृतिपरः प्रत्येकं सम्बध्यते ॥२४ ॥

शब्दब्रह्म[१०५] परब्रह्म[१०६] कार्यब्रह्म[१०७] च ब्रह्म[१०८] च ॥

सूत उवाच—

इतीदं प्रणवस्यास्य नाम्नामष्टोत्तरं शतम् ॥

सर्वदैवतपूजायै निमित्तं वेदसंमतम् ॥ २५ ॥

नामाख्यातोपसर्गनिपातप्रकृतिप्रत्ययादिघटितमूर्तिवेदव्याहृतिसारत्वाच्छब्दब्रह्म। विराड्हिरण्यगर्भाद्यात्मकापरब्रह्मापेक्षया कारणत्वेन परत्वात्परब्रह्म मकारार्थः । तत्सर्वसूक्ष्मस्थूलसृष्ट्युपहितं कार्यब्रह्मेति अकारौकारार्थः । एतावेव तत्त्वंपदार्थौ तयोः कार्यकारणोपाधिपरित्यागेन शोधने अखण्डैकरसं समस्तप्रणवलक्ष्यमर्द्धमात्रालक्ष्यं वा ब्रह्म, स एव प्रणवार्थो महावाक्यार्थश्च तद्रूप इत्यर्थः ॥ अत्र आदौ एकत्रिंशन्नामानि, अन्ते एकादश नामानि मातृकाक्षरक्रमं विनैव निर्दिष्टानि, मध्ये षड्षष्टिनामानि यथासम्भवं मातृकाक्षरक्रमेण निर्दिष्टानि । इतिशब्दः समाप्तौ । वेदानां सारत्वेन सम्मतम् ॥ २५ ॥

चिद्विलासविलासाय ॐकाराय नमो नमः ॥

यः पठेत्सततं जन्तुर्मुच्यते सर्वपातकैः ॥

यतिभिः पठनीयं च नियमेन त्रिकालतः ॥ २६ ॥

यो जन्तुरधिकारी सततं नित्यं पठेत्सः । तत्र यतीनां नित्यः अन्येषां काम्यो तत्पाठ इति दर्शयति *यतिभिरित्यादिना* ॥ २६ ॥

सर्ववेदफलं प्रैति ब्रह्मचारी पठेद्यदि ॥

वनस्थस्तापसीं सिद्धिं गृहस्थः कर्मणां फलम् ॥ २७ ॥

सर्ववेदफलमेकैकशाखाध्ययनफलम् । एवं वनस्थ एकैकतपसापि सर्वतपःसम्बन्धिनीं सिद्धिम्। एवं गृहस्थोऽपि सर्वत्र निर्विघ्नतया तत्फलसिद्धिमिति वा ॥ २७ ॥

नित्यं निर्दुःखमानन्दं संन्यासी लभते तदा ।

यस्मिन्देवे यस्य भक्तिस्तेन नामभिरेतकैः ॥ २८ ॥

एतकैः-एतैः, सर्वनामत्वात्प्रशंसायामकच् ॥ २८ ॥

चतुर्थीनमॐकारपूर्वैर्देवः स पूज्यताम् ॥

नामान्येतानि पार्वत्यै इत्येवं शंभुरब्रवीत् ॥ २९ ॥

*चतुर्थीनमॐकारपूर्वैरिति* चतुर्थ्यन्तैर्नम ॐकारपूर्वैरित्यर्थः। चतुर्थीनमोन्तैरोङ्कारपूर्वैरिति वा शाकपार्थिवादित्वकल्पनया मध्यमपदलोपी समासः। उपसंहरति *नामान्येतानीति* ॥ २९ ॥

इति प्रणवाष्टोत्तरशतनाम समाप्तम् ॥

सूत उवाच—

अथर्वरहस्यप्रणवषोडशनामानि वक्तुं प्रति जानीते—

अथातः संप्रवक्ष्यामि रहस्यं देवदुर्लभम् ॥

साङ्गोपाङ्गागमानां च पठने तुल्यदं फलम् ॥ १ ॥

*अथात इति* ।

साङ्गोपाङ्गानामागमानां वेदानामङ्गानि शिक्षादीनि षट्, उपाङ्गानि पुराणादीनि चत्वारि, वेदाश्चत्वारोऽङ्गिन इति। चतुर्दशविद्यास्थानानां पठने यत्फलं तत्तुल्यफलदमिति वक्तव्ये तुल्यदं फलमिति छांदसम् ॥ १ ॥

ॐकारः[1] प्रणवो[2]ऽनन्तः[3] सर्वव्यापी[4] च तारकम्[5] ॥

शुक्लं[6] सूक्ष्मं[7] वैद्युतं[8] च परं ब्रह्म[9] तथैव च ॥ २ ॥

ॐकारइत्यादीनि पञ्चदशनामान्यथ कस्मादुच्यन्ते? ॐकारो यस्मादुच्चार्यमाण एव सर्वं शरीरमूर्ध्वमुन्नामयतीत्यादिना अथर्वशिरसि श्रुत्यैव व्याख्यातानि तत एवावगन्तव्यानि ॥ २ ॥

एकश्च[10] एकरुद्रश्च[11] ईशानो[12] भगवांस्तथा[13] ॥

महेश्वरो[14] महादेवः[15] प्रत्यगात्मा[16] तथैव च ॥ ३ ॥

प्रत्यगात्मेति नाम तु तापनीयादौ प्रसिद्धं सर्वान्तरसाक्षिचैतन्यं परम

षोडशैतानि नामानि प्रणवब्रह्मणो द्विजाः ! ॥

मुमुक्षोर्मोक्षदानाय जगादाथर्वणी श्रुतिः ॥ ४ ॥

आथर्वणी अथर्वशिरस्तापनीयादिरूपा श्रुतिः ॥ ४ ॥

यः पठेत्त्रिषु कालेषु ज्ञात्वा माहात्म्यमेषु सः ॥
अपवर्गं शुभं प्रैति जन्तुस्तेनाऽभिवीक्षितः ॥ ५ ॥

माहात्म्यमथर्वशिरआद्युक्तं ज्ञात्वा यः पठेत्सः जन्तुः जन्तुप्रायः अल्पज्ञानतपस्कोऽपि तेन प्रणवात्मना महेश्वरेण अभिवीक्षितः सन् अपवर्गफलोपहितं शुभं तत्त्वज्ञानम् प्रैति ॥ ५ ॥

इति प्रणवषोडशनाम समाप्तम् ॥

ईदृशं नामादिरहस्यगर्भं कल्पमेव पठनादिना परिशीलनीयं परमपुरुषार्थिभिरिति प्ररोचयन्नुपसंहरति—

पठन्तु शृण्वन्तु च वाचयन्तु लिखन्तु गायन्तु च बोधयन्तु ।
ओङ्कारकल्पं यतिवृन्दसेव्यं सूतोक्तमीशोक्तमनिन्दितं च॥६॥

इति श्री स्कन्दपुराणे वैष्णवसंहितायां मन्त्रप्रस्तावे प्रणवकल्पे द्वितीयोऽध्यायः ॥ २ ॥

*पठन्त्विति* ॥ अन्ते सूत्रोक्तं आदौ ईशोक्तमिति शुद्धसांप्रदायिकत्वं दर्शितम् । अनिन्दितमिति प्रमाणान्तराविरुद्धत्वं दर्शितम् ॥ ६ ॥

इतिश्रीप्रणवकल्पप्रकाशे द्वितीयोऽध्यायः ॥ २ ॥

प्रणवः परमं ब्रह्म प्रणवः परमः शिवः ॥
प्रणवः परमो विष्णुः प्रणवः सर्वदेवताः ॥ १ ॥

प्रणवः परमं ब्रह्मेति प्राग्व्याख्यातम् ॥ १ ॥ रक्षःपिशाचादिभ्यो इदानीं प्रणवोपासकानां जपादिविघ्नकारिभ्यो यथा माभूत् इति सर्वविघ्ननिवारकं सर्वतोरक्षाकरं प्रणवपञ्जरं वक्तव्यं सूतः प्रतिजानीते—

सूत उवाच—

अथातः संप्रवक्ष्यामि पञ्जरं वज्रपञ्जरम् ॥
प्रणवब्रह्मणो विप्राः ! पापघ्नं शंभुरब्रवीत् ॥ २ ॥

*अथात* इति ॥ वज्रपञ्जरं वज्रमयं पञ्जरमिवाभेद्यम् । यद्यपि प्रथमपञ्जरपदस्य क्रतुनामधेयेनादिपदवत्साहृश्यगर्भगौण्यैव प्रवृत्तेः पुनः पञ्जरपदं पुनरुक्तमिव, तथापि 'उद्पेयं विनश्यी'त्यत्र पिबेरिवापौनरुक्त्यं बोध्यम् ॥ २ ॥

ॐकारः पातु तिष्ठन्तं शयानं प्रणवोऽवतु ॥
गायन्तं पात्वनन्तो मां भुञ्जानं परमेश्वरः ॥ ३ ॥

अत्र द्वितीयान्तानि मामित्यनेन संबध्यन्ते, प्रथमान्तानि प्रणव इत्यनेन। तिष्ठन्तम्—उपविष्टम् । शयानं निद्रोचिताङ्गविन्यासम्, भुंजानमभ्यवहरन्तम् ॥ ३ ॥

सर्वव्यापी सर्वदिक्षु सर्वाण्यङ्गानि सर्वगः ॥
सम्यक्कर्मसु मां देवः सर्वशास्त्रेषु मायिकः ॥ ४ ॥

सम्यक्कर्मसु शास्त्रविहितकर्मोपासनेषु देवस्तत्तत्कर्मोपासनाराध्यदेवतास्वरूपः शास्त्रेषु ज्ञानोपायेषु प्रमाणेषु मायिको मायाधिष्ठाता, मायाशब्दान्मत्वर्थीयेण् । मायानिवृत्तिलक्षणस्य शास्त्रफलस्य तदधीनत्वादिति भावः ॥ ४ ॥

निद्राणां पातु मां भद्रः करोतु शुभमव्ययम् ॥
पादादिमस्तकान्तानि रक्षत्वङ्गानि रक्षकः ॥ ५ ॥

भद्रो मङ्गलरूपः, स एव प्रमादप्रसक्तदिवासन्ध्यादिकं निद्राप्रसक्तं शुभकर्मणो व्ययं निवार्य तदव्ययं करोत्वित्यर्थः । रक्षकस्तत्तदङ्गाधिष्ठातृदेवतारूपेण तत्तदङ्गरक्षकः ॥ ५ ॥

विनाशयेदहङ्कारं बुद्धिमात्मनि चोदयेत् ॥
करोतु निर्मलं चित्तं निर्ममत्वादिचिन्तितः ॥ ६ ॥

अहङ्काराद्युपहितचिद्रूपेण तत्तदधिष्ठातृदेवतात्मना वा चिन्तितः॥६॥

दौर्ज्जन्यं वर्ज्जयेद्दूरं मयि सर्वबलं बनः ॥
सुखीकरोतु मामात्मा पैशाच्यादिभयं हरेत् ॥ ७ ॥

दौर्जन्यं दुष्टबीजयोनिकालदेशादिजन्मयुक्तं दुर्बुद्धिदोषं वर्जयेदिति, चुरादिण्यन्ताद्धेतुमणिचि प्रार्थनायां लिङ् । पैशाच्यादिभयं दुष्कर्मवशाद्भावि पैशाच्यादिप्रयुक्तं साम्प्रतिकपिशाचादिचेष्टाप्रयुक्तं च भयम् ॥७॥

सम्पन्नः सम्पदो दद्याद्विपदो विनिवर्तयेत् ॥
मूलाधारादिषट्चक्रं पातु षट्चक्रगोचरः ॥ ८ ॥

अणिमाद्यैश्वर्यसम्पन्नः सम्पदः ऐहिकीः पुत्रधनादिसम्पदः, आमुष्मिकीरणिमादिसम्पदश्च विपदोऽप्यैहिकीरामुष्मिकीश्च । गणपत्यादिदेवतारूपेण मूलाधारादिषट्चक्रगोचरः, योगबलोत्थापितकुण्डलिनीरूपेण क्रमान्मूलाधारादिषट्चक्रगोचरः सन् इति वा ॥ ८ ॥

भवाब्धिपोतान्यान्तत्र पतन्तमभिरक्षतु ॥

यमभीतिकरस्तस्माद्व्यान्मामतिघोरतः ॥ ६ ॥

यमस्यापि भीतिकरो भीषयिता 'भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम' इति श्रुतेः । अतिघोरतस्तस्माद्यमात् ॥ ९ ॥

पुनर्जन्म निराकुर्यादानन्दं स प्रयच्छतु ॥

पापकर्मसु मां शुभ्रो विमुखं विदधातु च ॥ १० ॥

शुभ्रः शुक्लः, मां विमुखं पराङ्मुखम् ॥ १० ॥

सन्धिभ्यो मां सन्धिकर्त्ता पायान्मर्मसु मर्मगः ॥

निर्ममत्वं सदा दद्यात्प्रणवः सर्वगोचरः ॥ ११ ॥

सन्धिभ्यः सन्धिप्रभवेभ्यो रोगेभ्यः, सर्वदेहावयवसन्धीनां निर्माणकर्त्ता । सर्वगोचरः सर्वममताविषयावभासचैतन्यरूपः ॥ ११ ॥

राज्ञो भयात् मन्त्रराजोऽराजभीत्या अराजकः ॥

पादाक्रान्तानरीन्कुर्याच्छत्रुसङ्घभयङ्करः ॥ १२ ॥

अराजभीत्या इति पदच्छेदः । अराजकप्रयुक्ताद्भयादित्यर्थः । न विद्यते नियन्ता यस्य स अराजकः ॥ १२ ॥

सर्वं वश्यं करोत्वार्यः सर्वदा मयि तिष्ठतु ॥

सूत उवाच—

इतीदं पञ्जरं दिव्यं प्रणवब्रह्मणो द्विजाः ! ॥ १३ ॥

आर्यः पूज्यः । मयि रक्षकत्वेन सर्वदा सर्वाङ्गेषु पञ्जरीभूतस्तिष्ठतु १३

यः पठेत्सततं जन्तुर्महापातकनाशनम् ॥

काव्यानां नाटकानां च दर्शनानां च सर्वशः ॥ १४ ॥

महापातकनाशनमितीदं पञ्जरं जन्तुरधिकारिजन्मवान्यो भवेत्स महामतिः सत्काव्यादिवेदपर्यन्तानां सर्वस्य च ग्रन्थजालस्य, अर्थं वेदेति व्यवहितेन सम्बन्धः । दर्शनानां न्यायवैशेषिकसांख्ययोगमीमांसाद्वयलक्षणानां षड्दर्शनानाम् ॥ १४ ॥

अलङ्कारमतानां च पुराणानां च सर्वशः ॥

वेदान्तानां च वेदानां गुरुशिक्षां विना स्वतः ॥ १५ ॥

अलङ्काराणां प्रसिद्धानां मतानां ग्राह्यपरमतानाम्, चकाराद्श्वगजरत्नादिपरीक्षाशास्त्राणाम्, पुराणानां चकारात्स्मृतीनाम्, वेदान्तानामु-

पनिषदां, चकाराद्व्याससूत्रभाष्यादीनाम्, वेदानां कर्मोपासनाका-
ण्डानाम् ॥ १५ ॥

ग्रन्थजालस्य सर्वस्य स वेदार्थं महामतिः ॥
ज्ञात्वा ग्रन्थार्थमेतेषां व्याख्याय छात्रकान्प्रति ॥१६॥

ग्रन्थजालस्य सर्वस्येति शिक्षाद्यङ्गानामायुर्वेदधनुर्वेदगान्धर्वा-
शास्त्राणां निधिमन्त्रशिल्पादिविद्यानां च संग्रहार्थम् । एतेषां सर्व-
वाङ्मयानां ग्रन्थार्थं ज्ञात्वा छात्रकान् शिष्यान्प्रति व्याख्याय ॥ १६ ।

अन्ते वेदान्तसिद्धान्तब्रह्म प्राप्नोत्यनुत्तमम् ॥
ॐकारपञ्जरं गौर्यै इत्येवं शम्भुरब्रवीत् ॥ १७ ॥

इति प्रणवपञ्जरं सम्पूर्णम् ॥

अन्ते प्रारब्धभोगावसाने ॥ १७ ॥

इति प्रणवपञ्जरव्याख्या सम्पूर्णा ॥

सूत उवाच—

अथातः सम्प्रवक्ष्यामि प्रणवब्रह्मणो द्विजाः ! ॥
मालामन्त्रं पुरा शम्भुर्यथा प्रोवाच पार्वतीम् ॥ १ ॥

मालामन्त्रं नाममालान्वितं मन्त्रम् ॥ १ ॥

ॐ नमो भगवते ॐकाराय निखिलवेदविदिताय वेदस्वरूपिणे अ-
खिलवाग्रूपिणे वागभिन्नप्रपञ्चरूपाय परब्रह्मणे करुणाकरविग्रहाय श-
ब्दब्रह्मणे प्रतीचे पराचे संसारपारावारतारकाय सकलकर्त्रे सकल-
भोक्त्रे सुरासुरस्वरूपाय चराचरकलेवरायाऽत्यन्तपुरुषार्थाय समस्तमु-
निप्राप्याय प्रणवाय सर्वभूतहृदयाय अरूपिणे अदेहायाऽद्वैतात्मने ।

भगवते षड्गुणैश्वर्ययुक्ताय, ॐ कारायेति विशेष्यम् । अन्यानि चतु-
र्थ्यन्तपदानि विशेषणानि । निखिलानां वेदानां सारत्वेन कारणत्वेन वेद्य-
त्वेन उपास्यत्वेन च विदिताय । अत एव वेदस्वरूपिणे । परात्मकस्य प्रण-
वस्यैव प्राणसञ्ज्ञावाभ्युरःकण्ठादिदेशेषु पश्यतीमध्यमावैखरीभावेना-
खिलवाग्रूपिणे 'सर्वं हीदं नामनी'त्यादिश्रुतेः । घटोयं पटोयमिति नाम-
तादात्म्यानुभवाच्च नामाभिन्नः प्रपञ्चस्तद्रूपाय । 'एतद्वै सत्यकाम पर-
चापरं च ब्रह्म यदोङ्कारः, यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एवे'त्या-
दिश्रुतेः परब्रह्मणे । गुरुदेवतादिरूपेणानुग्राहकत्वात्करुणाकरविग्रहाय ।

सर्वशब्दात्मना बृंहणाच्छब्दब्रह्मणे । प्रत्यग्दृशां प्रतीचे । पराग्दृशां पराचे । संसारलक्षणस्य पारावारस्य तारकाय । सकलस्य जगतः कर्त्रे निर्मात्रे । तथा सकलस्य भोक्त्रे उपभोक्त्रे । तत्र सद्-सत्कर्म कर्त्तुं च क्रमात्सुरासुरस्वरूपाय । अत एव सदसन्मिश्रकर्मजनितचराचरकलेवराय । अत्यन्तं पुरुषैरर्थ्यते इत्यत्यन्तपुरुषार्थः परमपुरुषार्थस्तस्मै ज्ञानफलाय । समस्तैर्मननशीला मुनयस्तैः प्राप्याय । स्वोपास्तिजपयज्ञपराणां ब्रह्म प्रणामयति वह्वीकरोतीति प्रणवस्तस्मै । सर्वभूतानामात्मत्वाद्रहस्यत्वाच्च हृदयाय । अरूपिणे इति चक्षुराद्यविषयत्वोक्तिः । अदेहायेति स्थूलसूक्ष्मकारणदेहप्रतिषेधः । अत एवाद्वैतात्मने । एतदन्तानां ॐ नमो भगवते ॐ कारायेत्यत्रान्वयः ॥

भो भो नित्यशुद्धमुक्तस्वरूप ! भेदबुद्धिप्रदायिनीं ग्रहणाग्रहणरूपिणीं सकार्यां सविलासिनीं महामायां विनाशय विनाशय, कामक्रोधलोभादिशत्रून्मारय मारय, शमदमादीन् सचिवान्संयोजय संयोजय, सुधर्मिणीं महाजायां मोक्षलक्ष्मीं विवाहय विवाहय, अपवर्गसाम्राज्ये मामभिषेचयाभिषेचय, स्वरूपं प्रकटय प्रकटय, जरामरणादिपिशाचानुच्चाटयोच्चाटय, शब्दादिवृश्चिकभयं निवारय निवारय, मातृयोनिजन्मपीडनं निवर्तय निवर्त्तय ।

इत ऊर्ध्वं सम्बुध्यन्तानां पदानां विषये तत्तत्क्रियास्वन्वयः । भोभो इति आदरेण सम्बोधनाद्द्विर्वचनम् । नित्यं शुद्धं बुद्धं मुक्तं स्वरूपं यस्येति बहुव्रीहिः । नित्येत्यादि प्रत्येकसम्बोधनानि वा । 'नाहं ब्रह्मेति' स्वात्मनि भेदबुद्धिप्रदायिनीम् । ग्रहणमन्यथा ग्रहणं देहादावात्मबुद्धिः, अग्रहणं ब्रह्मस्वभावास्फूर्तिस्तदुभयरूपिणीम् । सकार्यां वियदादिकार्यसहिताम् । जाग्रदादिविलासैः सविलासिनीम् । सर्वाविद्यासमष्टिरूपत्वान्महती मायाम् । स्वार्थतत्त्वसाक्षात्कारजननेन विनाशय, भृशार्थे द्विर्वचनम् । तदर्थं प्रथमं कामादीन् शत्रून्मारय । शमादीन् सचिवान् सहायान्संयोजय । शमदमोपरतितितिक्षाश्रद्धासमाधानानि शमादयः । अनपायित्वात्सुधर्मिणीम् । महान् त्रिविधपरिच्छेदशून्या जायते अस्यां स्वयमिति महाजाया तथाविधाम् । मोक्षलक्ष्मीं विवाहय । अपवर्गश्चरमप्रमाणफला निरतिशयानन्दावाप्तिस्तद्रूपे साम्राज्ये मामभिषेचय । स्वस्य पारमार्थिकं रूपं प्रकटय । जरामरणान्ताः षडूर्मयो जरामरणादयः पिशाचाः । शब्दादयः पञ्च श्रोत्रादीनां विषयास्त एव वृश्चिकास्तेभ्यो भयम् । मातृयोनि-

यन्त्रपीडनं जरायुजेषु प्रसिद्धं जन्मपीडामात्रोपलक्षणम् ।

महाभावैकगम्य! निरुपद्रव! निरतिशयैश्वर्य! बहुभयसंरक्षक! सान्तं सलक्षणं साङ्गोपाङ्गं सोपनिषत्कं सरहस्यं वेदं बोधय बोधय, मूर्तित्रय! मूर्तिरहित! शक्तित्रय! शक्तिरहित! आशापाशं छिन्धि छिन्धि, त्रिलोचनस्यापि व्यामोहैकनिदानं भगवन्तं मकरध्वजं भिन्धि भिन्धि, चतुर्दशभुवनात्मक! निःसीमदर्शनदरीदृश्यमान! चतुःषष्टिकलापराङ्मुख! निखिलमन्त्रयन्त्रप्रवर्त्तक! मातृकावर्णस्वरूप! कलिमलप्रध्वंसिन्! कालभयपरावर्त्त! विषयविपिने पतन्तं, मार्गादर्शिनं मार्गमाणं. त्रातारमाक्रोशन्तं क्षुत्तृष्णाव्याघ्रादिभिः पेपीयमानमार्त्तं मुमुक्षुं मामुद्धरोद्धर, आत्मन्! प्रत्यक्शब्दवाच्य! निरुपमवैभव! नित्योत्सन्न! अतीतद्वन्द्वदुःख! मूढजनदुःखप्रद! भक्तजनकल्पद्रुम! उपनिषदेकवेद्य! समस्तवेदवन्दिस्तुत्य! ब्रह्मादिसमाराध्य! स्वात्मानं मां प्रापय प्रापय स्वाहा ॥

महान्भावनं भावश्चित्तैकाग्र्ये निर्विकल्पसमाधिपर्यन्तं तदेकगम्य! निरुपद्रव! हैरण्यगर्भान्तानामैश्वर्याणां सोपद्रवताप्रसिद्धेः। निरतिशयैश्वर्य! बहुभ्यो भयेभ्यः संरक्षक! सान्तं वेदान्तसहितम्। सलक्षणमूहादिलक्षणं शाब्दार्थसहितम्। अङ्गैः शिक्षादिषडङ्गैरुपाङ्गैः पुराणन्यायमीमांसाधर्मशास्त्रलक्षणैरष्टभिर्विद्यास्थानैः सहितम्। उपनिषदो गुह्यविद्या तत्सहितम्। सरहस्यमित्यादिना मन्त्ररहस्यसहितम्। वेदं मां बोधय२। सर्गादिव्यवहारार्थं हे ब्रह्मविष्णुमहेश्वराख्यमूर्त्तित्रय! परमार्थतो मूर्तित्रयरहित! ज्ञानेच्छाक्रियाख्यशक्तित्रय! परमार्थतस्तु तद्रहित! आशापाशं छिन्धि२। त्रिलोचनस्य कृशानुरेतसः सर्वज्ञस्य रुद्रस्यापि व्यामोहे किमुतान्येषामेकनिदानम्। भगवन्तं जगज्जयैश्वर्योद्धतं मकरध्वजं कामं भिन्धि२। हे चतुर्दशभुवनात्मक! अत एव निरतिशयसार्वज्ञ्यलक्षणेन निःसीमदर्शनेन अपरिच्छिन्नसर्ववस्तुतत्त्वसाक्षात्कारेण दरीदृश्यमान स्फुटं सर्वं सर्वं पश्यन्। दृशेर्यङन्ताच्छानचि अभ्यासस्य रीगृदुपधस्य चेति रीगागमः। नित्यसिद्धे सार्वज्ञ्ये चक्षुर्लिङ्गशब्दादिप्रमाणापेक्षाभावाच्चतुःषष्टिकलाश्चतुःषष्टिविद्यास्तत्पराङ्मुख, अष्टादश विद्यास्थानानि चतुर्दशोपविद्याः द्वात्रिंशच्छिल्पविद्याश्चेति चतुःषष्टिकलास्तदप्रधान्तन्निरपेक्षेति यावत्। निखिलमन्त्राणां यन्त्राणां तत्प्रतिपादकतन्त्राणां च प्रवर्त्तक! मातृकावर्णानां वैखरीप्रभवत्वात्परापश्यन्तीमध्यमावैखरी

क्रमेण तत्प्रवर्त्तक ! कारणस्यैव कार्यात्मनावस्थानान्मातृकावर्णस्वरूप !
स्वोपासकानां कलिमलप्रध्वंसिन्! कालाङ्कयं कालभयं तत्परावर्त्तयतीति
कालभयपरावर्त्त ! कर्मण्यण्। चोरापनीतवद्धाक्षगांधारपुरुषवद्विषयलक्ष-
णे विपिने गिरिप्रपातारण्ये पुनः पुनरधोधः पतितम्, मोक्षमार्गादर्शिनम्,
अत एव मार्गप्रदर्शकं त्रातारं मार्गमाणमन्विष्यन्तं, तमेवाक्रोशन्तं, क्षुत्तृणा-
लक्षणैर्व्याघ्रवृश्चिकदंशकीटादिभिः रक्तशोषणात्पेपीयमानम्, आर्त्तमत्यन्त-
भीतं, ग्रहातिग्रहादिसंसारबन्धान्मुमुक्षुं मां संसारारण्यगर्त्तादुद्धरोद्धर ।
हे आत्मन्! भूतात्मा चेन्द्रियात्मा चेत्यादाविवामुख्यात्मतां वारयति
*प्रत्यक्शब्दवाच्येति*॥ 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्व-
मिच्छन्नि'ति श्रुत्युक्तप्रत्यक्शब्दवाच्येत्यर्थः । तर्हि किं परिमितविभवो
जीवः नेत्याह *निरुपमवैभवेति* ॥ तदुपपत्तये *नित्योत्सव अतीतद्व-
न्द्वदुःखेति* । यद्येवंविध आत्मा कुतस्तर्हि जनानां दुःखं तत्राह *मूढजन-
दुःखप्रदेति* । 'तत्त्वेव भयं विदुषोऽमन्वानस्ये'तिश्रुतेः । मन्वानस्य तर्हि
किं तत्राह *भक्तजनकल्पद्रुमेति* । आर्तजिज्ञास्वर्थार्थिज्ञानिलक्षणानां
चतुर्विधभक्तजनानां कल्पद्रुमवत्तत्तदभिलपितफलपूरकेत्यर्थः। तत्र द्वि-
तीयस्य तज्ज्ञानोपायप्रमाणमाह *उपनिषदेकवेद्येति* । 'सर्वे वेदा
यत्पदमामनन्ती'तिश्रुतेः । सर्वश्रुतीनामपि तत्रैव परमतात्पर्यपर्यव-
सानमित्याशयेनाह *समस्तवेदवन्दिस्तुत्येति* ॥ सर्वदेवाराध्यत्वेन
सर्वोत्कर्षोऽपि तस्यैवेत्याह *ब्रह्मादिसमाराध्येति*। अत :स्वात्मतया
तल्लाभमेव प्रार्थयन् 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवत्येवं मुनेर्वि-
जानत आत्मा भवति गौतमे'तिश्रुतिदर्शितदिशा स्वात्मानं तत्र जुहोति-
'ब्रह्मादिसमाराध्य स्वात्मानं मा प्रापय स्वाहे'ति ॥

उक्तमुपसंहरंस्तत्फलमाह—

सूत उवाच—

ॐ कारमालिकामन्त्रमित्येवं शंभुरब्रवीत् ॥

स्मरन्नेतन्मन्त्रराजमनिच्छन्नपि मुच्यते ॥ १ ॥

इति प्रणवमालामन्त्रः ॥

*ॐ कारमालिकामन्त्रमिति* ॥ १ ॥

इति प्रणवमालामन्त्रः ॥

अथ प्रणवगायत्रीमाह—

ॐकाराय विद्महे भवताराय धीमहि तन्नः प्रणवः प्रचोदयात् ॥

इति प्रणवगायत्री ॥

*ॐकारायेति*॥ ॐ मित्यवस्थात्रयातीतं तुरीयं परं ब्रह्मोच्यते तत्त्व-बोधेन करोतीत्योङ्कारः स एव, कर्मण्यण्। ॐ कृतिरोङ्कारः प्रतीच-स्तत्भावापत्तिः। करोतेर्भावे घञ्। भवतारपदेऽप्येवम्। शब्दपक्षे तु वर्णात्कार इति स्वार्थे कारप्रत्ययानुशासनादोमेवोङ्कारः। शब्दार्थ-योरभेदकल्पनादर्थात्मना शब्दो ध्येयः। अर्थतत्त्वात्मना तु ज्ञेयः। तदर्था-नुसन्धानप्रकर्षजं साक्षात्कारज्ञानं फलम्। तदुद्दिश्यार्थात्मकशब्दानुस्म-रणधारात्मकं ध्यानमनुष्ठीयमानं प्रकाश्यते। ध्यानाविच्छित्यै च तदा-त्मा परमेश्वरः प्रेरयत्विति प्रार्थ्यते॥

इति प्रणवगायत्रीतात्पर्यार्थः॥

तत्राक्षराणि योज्यन्ते–ॐकाराय घञन्तपक्षे तुमर्थाच्च भाववचना-द्दिति चतुर्थी ॐ कर्तुम्। अणन्तादिपक्षे तु क्रियार्थोपपदस्येति। ॐका-रात्मकं प्रत्यगभिन्नं परं ब्रह्म प्राप्तुं विद्महे साक्षात्स्वाभेदेन जानीमः। तदुपायतया सकार्याविद्यालक्षणं भवं तर्तुं भवतारकं तं साधयितुं वा यथाशास्त्रं धीमहि ध्यायेमहि, ध्यायतेर्लिङि छान्दसो विकरण-लुक्संप्रसारणं च। तच्चादृशेन ध्यानेन अस्मान् प्रणवः प्रणवात्मा परमे-श्वरः प्रचोदयात् प्रचोदयेत्। छान्दसत्वादतोयेय इत्यस्याप्रवृत्तिः। प्रार्थनायां लिङ् मन्त्रार्थपर्यालोचनेनैव जपोपासनफलबोधसिद्धेः पृथक् तत्फलं न कीर्तितम्॥

इति प्रणवगायत्रीव्याख्या॥

अथ प्रणवयन्त्रम्। तल्लक्षणं तु शिवोक्तमेव मन्त्रदेवताप्रकाशिका-यामुक्तम्—

पद्कुक्षिं पीठसंस्थं तदुपरिविलसत्सोमसूत्रं सबिन्दुं
तन्मध्ये नादसंज्ञं प्रणवमभिवृतं बिन्दुनादौ पुनश्च॥
एवं सचिन्त्य योनिप्रणवमनुदितं तारकं व्योमसंस्थं
सर्वाधारं महेशं सकृदपि मनसा संस्मरेद्यः स मुक्तः॥ इति॥

अस्यार्थस्तत्रैवोक्तः। पद्कुक्षिरित्यकारोऽन्वर्थसंज्ञः। पीठमित्युकारः। सोमसूत्रमिति तिर्यग्भूतरेखाद्वयम्। नादमिति तत्र दीर्घरेखा। तारकं प्रणवः। तदुपरि च बिन्दुनादौ। व्योम हकारः। शेषं प्रसिद्धमिति। तल्लेखनप्रकारस्तु संप्रदायतोऽवगन्तव्य इत्याहुः।

आदावकारमथ ॐ प्रणवेन सन्धि बिन्दुद्वयं तदनुवेष्टनलेखनं च॥
हंकारतश्च यरवान् लमधः पृथिव्यां यन्त्रं नवस्य मुनिभिः परिकीर्तितं चा॥

अन्ये तु मन्यन्ते। उकारोपर्यकारस्य तदुपरिमकारस्य च बिन्दुनादौ

संहितायां प्रणवानिष्पत्तेः, "आदावकारमथ ॐप्रणवेन सन्धि विन्दुद्वयं तदनु वेष्टनलेखनं च। हङ्कारतश्च यरवान् लमधः पृथिव्यां यन्त्रं नवस्य मुनिभिः परिकीर्तितं चे"ति कल्पोक्तप्रकारविरोधाच्च नायं प्रकारो युक्त इति। पद्कुक्षिमितिश्लोककल्पोक्तप्रकारानुरोधेन व्याख्यायते—पीठमाधारः, पृथिवीचक्रं चतुरस्रं तत्संस्थं पद्कुक्षिमर्धचन्द्राकारं जलचक्रमाद्यः कुक्षिरिति लिङ्गस्याधस्तनं पीठम्। तदुपरि त्रिकोणाकारं वह्निचक्रं द्वितीयः कुक्षिस्तदुपरि षट्कोणं वायुचक्रं तृतीयः कुक्षिरिति लिङ्गस्योर्ध्वपीठम्। तत्पार्श्वयोर्लिङ्गमूलरेखाद्वयेन कोष्ठद्वयनिष्पत्तेर्द्वौ कुक्षी, तदुपरि विन्द्वात्मवर्तुलमाकाशचक्रं लिङ्गमेकं कुक्षिरिति पद्कुक्षिम्। तदुपरिविलसत्सोमसूत्रमिति। द्वितीयपीठोपरि लिङ्गमूले तिर्यग्रेखाद्वये चोत्तरतः सोमसूत्राकारो लेख्यः, तस्य लिङ्गस्य मध्ये नादसंज्ञं वामत एकोर्ध्वरेखा तत्समीपे व्योमसंस्थं हकारकुक्षिगतं प्रणवं पुच्छेन सर्वं सपीठं लिङ्गमभिवृतं लिखेत्। तच्छिरसि सूक्ष्मविन्दुं तद्वामतश्च पुनर्नादाख्यां पूर्ववदूर्ध्वरेखां पुनश्च लिखेदित्यर्थः। शेषः स्पष्टः ॥ ॐ ॐ ॥

अत्र कल्पोक्तप्रकारैकवाक्यसिद्धये वायुचक्रे यकारोदरे मकारम् अग्निचक्रे रेफोदरे उकारं जलचक्रे वकारोदरे अकारं, तत्त्रितयगर्भसंहितमोङ्कारं च लिखेत्। पृथिवीचक्रे केवलं लकारमेवेति ॥

आदावकारमित्यस्य आद्यकुक्षौ अकारमथ द्वितीयकुक्षौ उकारम्, उमिति मकारनिर्देशस्य विवक्षितत्वात्तृतीयकुक्षौ मकारम्, त्रयाणां प्रणवभावेन संहितायां सन्धि ॐकारं विन्दुद्वयमिति द्वयोः प्रणवयोर्बिन्दुद्वयम्, अवशिष्टकुक्षिद्वये वा चन्द्रसूर्यात्मकविन्दुद्वययोः प्रणवयोरन्यतरस्य वा पुच्छेन सपीठलिङ्गं वेष्टनम्। आकाशादिकोष्ठेषु यं रं वं इति लिखित्वा अधः पृथिव्यां पृथिवीचक्रे चतुरस्रे लं लिखेत्। इति नवस्य प्रणवस्य यन्त्रं परिकीर्तितमित्यर्थः ॥ १ ॥

अथातः संप्रवक्ष्यामि स्तवराजं भयापहम् ॥
प्रणवब्रह्मणो विप्राः! साक्षान्मोक्षैकदायकम् ॥ १ ॥

अथ यन्त्रकथनानन्तरम्, अतः अस्माद्यन्त्रवत् स्तवराजस्याप्युपासकानामावश्यकत्वात्, साक्षान्मोक्षस्यैकं मुख्यं दायकं, कर्तरि ण्वुल्यातो युक् ॥ १ ॥

उत्पत्तिस्थितिभङ्गानि जायन्ते जगतो यतः ॥
कार्यकारणकर्तारमोङ्कारं प्रणमाम्यहम् ॥ २ ॥

उत्पत्तिश्च स्थितिश्च भङ्गश्चैषां समाहार उत्पत्तिस्थितिभङ्गम्, कल्पा-नन्त्येन समाहाराणामपि बहुत्वादुत्पत्तिस्थितिभङ्गानि, अनन्तानां अन-तां यतो जायन्ते। सर्वक्रियाणाम् कार्यं फलं कारणमस्वतन्त्रम् अचेतनं कारकान्तरम्, कर्त्ता स्वतन्त्रश्चेतनस्तदात्मकम्, कार्यकारणयोः कर्तार-मिति वा, यच्छब्ददर्शनात्तमिति सर्वत्राध्याहार्यम् ॥ २ ॥

यो गूढः सर्वभूतेषु सर्वभूतानि शास्ति यः ॥
सर्वभूतस्वरूपी च ॐकारं प्रणमाम्यहम् ॥ ३ ॥

सर्वभूतोपादानाज्ञानावृतत्वाद्गूढः। अत एव यावदज्ञातस्तावत्प्रभु-र्भूत्वा सर्वभूतानि शास्ति। सर्वभूतस्वरूपी च यावन्मोक्षं स्वयमेवास्ते॥

विश्वं चराचरं सृष्ट्वा तदन्तः प्रविवेश यः ॥
तिलेषु तैलवत्सूक्ष्मः प्रणवं प्रणमाम्यहम् ॥ ४ ॥

तदन्तरधिष्ठानभावेन जीवभावेन च यः प्रविवेश ॥ ४ ॥

अग्रे सृष्टेः प्रपञ्चस्य य आस्ते वटबीजवत् ॥
स्रष्टारं च पुनस्तस्य प्रणवं प्रणतोस्म्यहम् ॥ ५ ॥

सृष्टेः अग्रे प्राक् पुनःसृष्टिकाले तस्य प्रपञ्चस्य स्रष्टारम् ॥ ५ ॥

आब्रह्मस्तम्बपर्यन्तं भूतानि व्याप्य जीववत् ॥
यः संसरति भूतात्मा प्रणवं प्रणतोस्म्यहम् ॥ ६ ॥

भूतानि तत्प्राणिशरीराणि भूतात्मा तत्तद्देहात्मभावापन्नो यः संस-रति देहाद्देहान्तरं सञ्चरति ॥ ६ ॥

ईश्वरब्रह्मविष्णूनां रजःसत्त्वतमोगुणैः ॥
जनकं यत्परं वस्तु तारकं पातु नः सदा ॥ ७ ॥

ईश्वरब्रह्मविष्णूनां पञ्चमुखचतुर्भुजशरीराणां जनकं स्वेच्छया क-ल्पकम् ॥ ७ ॥

सर्वभूतहृदाकाशे काशते निर्मलं परम् ॥
आकाशवत्सर्वगं यत्तारकं पातु सर्वदा ॥ ८ ॥

काशते—अहमिहमित्यात्मभावेन सर्वान्तः बहिःकरणव्यापारसाक्षित-या च प्रकाशते, हृदयपरिच्छेदस्य मिथ्यात्वात्। आकाशवत्सर्वगतम् ॥८॥

वेदा यस्य शिरः प्रोक्तं शास्त्राण्यङ्गानि यस्य च ॥
अङ्गानि यस्य रोमाणि प्रणवः स विराजते ॥ ९ ॥

पुराणं वाचकं यस्य ज्ञापकं धर्मशास्त्रकम् ॥
इतिहासा यस्य हासाः प्रणवः स विराजते ॥ १० ॥

वाचकं सुहृत्संमितत्वान्मनोरञ्जनेन हितवक्तृ । ज्ञापकं प्रभुवदाज्ञापकम् । इतिहासा भारतादिसत्काव्यानि यस्य कान्तासम्मितेहितोपदेशकत्वाद्धासाः स्मितानि । विराजते सर्वोत्कर्षेण शोभते ॥ १० ॥

वेदान्ता यस्य सर्वेऽपि शरीरश्रुतिमस्तकम् ॥
वाग्जालं येन संव्याप्तं प्रणवः स विराजते ॥ ११ ॥

यस्य प्रणवस्य सर्वेऽपि वेदान्ताः शरीरवन्मुख्याभिव्यक्तिस्थानं श्रुतयो मस्तकानि यस्य तथाविधम्, सर्वं वाग्जालं येन सम्यग् व्याप्तं 'तद्यथा शंकुना सर्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण सर्वा वाक्संतृण्णे'ति श्रुतेः ॥ ११ ॥

यज्जप्त्वा परमात्मानं विश्वामित्रादयो द्विजाः ॥
ब्राह्मण्यं लेभिरे ब्रह्म तारं दिशतु नः फलम् ॥ १२ ॥
यं मत्वा विभुमीशानं दुःखं नोपैति साधकः ॥
सर्वदुःखौघसंहर्तृ तारं दिशतु नः फलम् ॥ १३ ॥

यत्तारं ब्रह्म जप्त्वा विश्वामित्रादयः, आदिपदाद्विश्वामित्रगोत्रजा अन्ये च गृह्यन्ते, ब्राह्मण्यं अग्र्यां जातिम् 'अमौनं च निर्विद्याथ ब्राह्मण' इतिश्रुतिप्रसिद्धं ब्रह्मनिष्ठत्वं च लेभिरे । तत्तादृशं तारं नस्तादृशं ब्रह्मवेदनफलं दिशत्वित्यर्थः ॥ १२ ॥ १३ ॥

आलोड्य सर्वशास्त्राणि निश्चिन्वन्ति मुनीश्वराः ॥
ध्येयं तारकमित्येव तारकं तदुपैम्यहम् ॥ १४ ॥

मुनीश्वराः सर्वशास्त्राण्यालोड्य सम्यङ्न्यायैर्विचार्य यत्तारकमेवैकं ध्येयं निश्चिन्वन्ति । 'शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य ॐ मित्येवं ध्यायथ आत्मानमित्यात्मानं युञ्जीते'त्यादिश्रुतिनिष्कर्षादिति भावः ॥ १४ ॥

वेदान्ताम्भोजसद्मानां भास्कराय प्रकाशिने ॥
निर्मलाय स्वरूपाय प्रणवाय नमो नमः ॥ १५ ॥

वेदान्ताम्भोजसद्मानां प्रकाशिने विकासिने भास्कराय, स्वमात्मतद्रूपाय ॥ १५ ॥

जीवा जीवन्ति येनैव प्राणापानादिचेष्टया ॥
यमाश्रिता उभौ तस्मै प्रणवाय नमो नमः ॥ १६ ॥

जीवाः सर्वे येनैवात्मना जीवन्ति चेतयन्ति, उभौ प्राणापानौ यं परमात्मानमाश्रितौ, तथा च श्रुतिः—

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ इति ॥
ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥ इति च ॥ १६ ॥

इतरस्य महामन्त्रजालस्य फलदोऽपि यः ॥
सर्वमन्त्रादिरूपाय प्रणवाय नमो नमः ॥ १७ ॥

इतरस्य स्वातिरिक्तस्य वैदिकस्य तान्त्रिकस्य वा महामन्त्रजालस्य तत्तद्देवतारूपेण प्रसन्नस्तत्तत्साधकाभिलषितफलप्रदोऽपि यः प्रणव एव, अतः सर्वमन्त्रदेवतादिरूपाय प्रणवाय नमो नमः पुनः पुनर्नम इत्यर्थः ॥ १७ ॥

प्रत्यग्रूपाय दिव्याय रविमण्डलवासिने ॥
पुरुषेष्वधिवासाय तारकाय नमो नमः ॥ १८ ॥

सर्वप्राणिनां हृदि प्रत्यगात्मरूपायेत्यध्यात्मम् । दिव्यायेत्यधिदैवतम् । रविमण्डलवासिने 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति श्रुतेः । अत एव व्यष्टिसमष्टिपुरुषेष्वधिवसतीत्यधिवासस्तस्मै॥१८

रज्जुर्यथा सर्परूपा भ्रान्त्या भाति तथाऽव्ययम् ॥
तारकं विश्वरूपेण भाति तस्मै नमो नमः ॥ १९ ॥

यथा रज्जुर्भ्रान्त्या सर्परूपा भाति तथा यदव्ययं तारकं विश्वरूपेण भाति तस्मै तारकाय नमो नमः ॥ १९ ॥

विश्वस्य यं हि गायत्रीं त्यजन्ति यतिपुङ्गवाः ॥
ॐकाराय नमस्तस्मै ॐकाराय नमो नमः ॥ २० ॥

यतिपुङ्गवाः यं प्रणवं ब्राह्मण्यस्थापकं तारकं च विश्वस्य विश्वासेनावलम्ब्य निःशंकं शिखासूत्राद्यङ्गसहितां गायत्रीं त्यजन्ति, तस्मै ॐ काराय यतिजनानङ्गीकुर्वाणाय ओङ्काराय नमो नमः ॥ २० ॥

पूर्वोक्तो गायत्रीत्यागोऽग्नित्यागवद्वाचि गायत्र्योः समारोपमात्रं तदपि तत्सारप्रणवतत्त्वदर्शनार्थं न तु स्त्रीपुत्रादिवत्प्रहाणिरिति दर्शय-

न्नुपसंहरति—

आरोपयन्ति वाचाऽग्नौ गायत्रीं यद्विदस्तथा ॥
ॐकाराय नमस्तस्मै ओङ्काराय नमो नमः ॥ २१ ॥

*आरोपयन्तीति* ॥ वाचा वाक्सामान्यात्मा ॐकारस्तल्लक्षणे स-
कार्याविद्यादाहकत्वादग्नौ सव्याहृतिकां गायत्रीं संन्यासकाले आरोप-
यन्ति समारोपयन्तीत्यर्थः ॥ शेषं पूर्ववत् ॥ २१ ॥

सूत उवाच—

स्तवराजं स्तवश्रेष्ठं शृण्वन्ति च पठन्ति च ॥
ये मानवा विपापास्ते यान्ति मुक्तिं सुदुर्लभाम् ॥ २२ ॥

सर्वस्तवानां राजा अधिपतिः, न केवलमाधिपत्यमेव किन्तु गुणप्र-
भावादिना श्रैष्ठ्यमप्यस्तीति स्तवश्रेष्ठम् ॥ २२ ॥

मुनीन् संबोध्याह—

तस्मात्पठन्तु सर्वेऽपि मोक्षवाञ्छाऽस्ति वो यदि ॥
स्तवराजं महादेव्यै इत्येवं शम्भुरब्रवीत् ॥ २३ ॥
इति प्रणवकल्पे प्रणवस्तवराजः समाप्तः ॥

*तस्मादिति* । इत्येवमित्युपसंहारः ॥ २३ ॥

इति प्रणवस्तवराजव्याख्या समाप्ता ॥

इदानीं प्रागुक्तप्रणवनवांशानां प्रत्येकं गुणमाहात्म्यादिप्रकाशकम-
क्षरमालिकास्तोत्रमाह—

सूत उवाच—

ॐकाराक्षरमालिकामनुमिमं वक्ष्यामि हे भूसुरा !
मोक्षप्राप्तिकरं विशेषसुखदं नित्योत्सवं शाश्वतम् ॥
पार्वत्यै सुरसेविताङ्घ्रिकमलः शम्भुर्यथा भाषते
यो मन्त्रो यतिपापनाशकरणोपायाय सन्निर्मितः ॥ १ ॥

*ॐ काराक्षरेत्यादिना* हे भूसुरा ब्राह्मणाः ! अहमिदानीं ॐका-
राक्षरमालिकास्तवलक्षणं मनुवत्प्रयतजप्यं स्तोत्रं वक्ष्यामि । मुमुक्षूणां
मोक्षप्राप्तिकरं, भोगसुखार्थिनां विशेषसुखदम्, उभयेषां नित्यं प्रतिदिनमु-
त्सवो हृदयानन्दो यस्मात्तथाविधम्, शश्वद्भवं शाश्वतं सदैवाविहतसाम-
र्थ्यम् । नचात्र विप्रतिपत्तव्यमित्याह *पार्वत्यै इति* जगदीश्वरसर्वज्ञ-
प्रवचनत्वादव्याहतशक्तिकमित्यर्थः । किञ्च यो मन्त्रो रहस्यभूतस्तवः य-

तीनां प्रमादप्रसक्तब्रह्मचर्यापरिग्रहाहिंसादिधर्मविप्लवप्रयुक्तपापानां नाशकरणाय शमदमादिज्ञानोपायसिद्धये च जगदीश्वरेणैव सम्यङ्निर्मितः न मया स्वबुद्ध्योहित इत्यर्थः ॥ १ ॥

तत्र नवांशविशिष्ट ॐकारो प्रथममेवंप्रभावो ध्येय इत्याशयेनाह—

ॐकारं परमीशतत्वमखिलं वेदार्थतत्त्वप्रदं
नित्यं निर्मलमव्ययं निरुपमं निःशेषबीजाभिधम् ॥
कार्यं कारणमात्मनिष्ठमखिलं प्रोत्साहपूर्वं स्मृतं
भेदाभेदविवर्जितं श्रुतिशिरोमानं सदा ध्यायति ॥ २ ॥

*ॐकारमिति* ॥ यतोऽयमोङ्कारो यतीनां मोक्षप्राप्तिकरः सर्वपापहरश्च अतः आत्मन्येव निष्ठा विश्रान्तिर्यस्य तथाविधमखिलं कृत्स्नमारुरुक्षुमारूढं च यतिवृद्धम् प्रोत्साहपूर्वं प्रकृष्टोत्साहपूर्वकं त्रिसंध्यं नियमेन स्मृतम् ॐकारमेवं सदा ध्यायतीति सम्बन्धः । कीदृशं ॐकारं वेदार्थतत्त्वप्रदं कर्मोपासनाज्ञानकाण्डात्मकवेदानमर्था प्रयोजनानि स्वर्गादीनि तेषां यत्तत्वं निरतिशयानन्दरूपं यत्र काण्डत्रयफलमन्तर्भवति तत्प्रदं 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति श्रुतेः। कुतोऽस्य तत्प्रदानसामर्थ्यं तत्राह अखिलं परमीशतत्त्वमिति । यतोऽसौ अखिलं निरङ्कुशं परमुत्कृष्टम् ईशस्य सर्वशक्तिसम्पन्नस्य जगदीश्वरस्य तत्त्वं पारमार्थिकं स्वरूपम्, अत एव नित्यं कालापरिच्छेद्यम्, निर्मलमविद्यारागादिमलरहितम्, अव्ययं षड्भावविकारशून्यम्, निरुपमं तादृशतत्त्वान्तराप्रसिद्धेरुपमातुमशक्यम्। तत्कुतः? तत्राह *भेदाभेदविवर्जितमिति*॥ कैश्चिद्धर्मैर्भेदे कैश्चिदभेदे च मुखं चन्द्रेणोपमीयते न चायं तथेत्यर्थः। कुतो भेदाभेदविवर्जितं ? तत्राह *कार्यं कारणं निःशेषबीजाभिधमिति* ॥ यतः अकारोकारमात्राद्वयोपात्तं स्थूलसूक्ष्मकार्यं मकारार्थभूतं कारणं च। 'नान्तः प्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञम्' इत्यादिना अवस्थात्रयेण सह निषेधान्निःशेषाभिधेयसर्वद्वैतबीजसहिता अभिधा यस्मिंस्तथाविधम्। अत एव न तत्र मानान्तरप्रसर इत्याह *श्रुतिशिरोमानमिति* । श्रुतिशिरसां मौनसङ्कल्पवाक्यात्मसहितसर्वद्वैतनिरासकत्वसम्भवादिति भावः॥२॥

समग्रप्रणवध्यानानन्तरं तत्प्रथमांशोऽकारः प्रथमं विष्णुरूपेणैव ध्येय इत्याशयेनाह—

अङ्कारं करुणैकरूपममलं कारुण्यपूर्णेक्षणं
कर्पूरप्रचुरोत्थचूर्णविमलं कर्पूरसम्पादकम् ॥

कामाकामविभीतिभीतिकृपिकासिन्धूरसोद्धूलनं
सिन्धूद्भूतरसातलेशमनिशं विष्णुं भजे सुन्दरम् ॥ ३ ॥

*अङ्कारमिति* सानुस्वारनिर्देशः सर्वत्र संहारक्रमेण ध्येयताद्योतनार्थः। यद्यपि 'अकारं ब्रह्माणं नाभौ उकारं विष्णुं हृदये' इत्यादिश्रुतिषु अकारो विराडात्मा ब्रह्मा उकारस्तु हिरण्यगर्भात्मा तत्कारणं विष्णुः प्रसिद्धस्तथाप्यत्र 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित' इत्यादिश्रुतिषु 'अकारो वासुदेवः स्यात्, अक्षराणामकारोऽस्मीत्यादिस्मृतिषु च वासुदेवस्याकारात्मत्वप्रसिद्धेः सत्त्वरजस्तमोगुणक्रमानुरोधाच्चात्र अकारो विष्ण्वात्मना ध्येय उक्तः। अङ्कारं विष्णुं भजे इति सम्बन्धः। विष्णोः शुद्धसत्त्वावच्छिन्नचिद्रूपत्वात्तदनुरूपं विशिनष्टि *करुणैकरूपमित्यादिना* विष्णोर्जगत्पालनस्य दयैकसाध्यत्वात्करुणैकमूर्त्तिम्। रागद्वेषमोहादिमलविरोधित्वादमलम्। सर्वप्राणिसुखार्थित्वात्कारुण्यपूर्णेक्षणम्। 'अजामेकां लोहितशुक्लकृष्णामि'ति श्रुतौ सत्त्वगुणस्य शुक्लत्वोक्तेः कर्पूरप्रचुरोत्थचूर्णविमलम्। अत एव तस्योपासनं दुःखतापोपशमनविवेकनेत्रानन्दनसद्वासनासौरभ्यजननज्ञानदीपोज्ज्वलनकर्पूरस्य चित्तैकाग्रस्य सम्पादकम्। क्षुद्रविषयतत्साधनेष्वेव कामः, परमपुरुषार्थतत्साधनेष्वकामः, जन्ममरणनरकाद्यनर्थसाधनेभ्यः पापेभ्योऽविभीतिरभीरुता, द्रव्यव्ययायाससाध्येभ्यो दानयज्ञतपःप्रभृतिभ्यः संन्यासभिक्षचर्याश्रवणमननध्यानादिभ्यश्च भीतिर्भीरुता, कृपिका लाभकार्पण्यमित्यादिदोषसिन्धोः संसारसमुद्रस्य यो रसः जलं कामकर्मवासनाज्ञानलक्षणं तस्य निःशेषशोषणेन उद्धूलनमुध्वं धूल्युद्गमहेतुम्। तथा सिन्धूद्भूतायाः क्षीरसमुद्रकन्यायाः सर्वकर्मफलाधिदेवतायाः रसायाः भूमेः सर्वभाग्यरूपायाः तलस्य तदुपभोगस्थानचतुर्दशभुवनतलस्य च ईशं स्वामिनम्। सुन्दरं कन्दर्पकोटिकमनीयविग्रहम्। विष्णुं भजे सदा ध्यानेन सेवे। सिन्धूरसेत्यत्र दीर्घश्छान्दसः ॥ ३ ॥

उङ्कारं पिशिताशनाशकरणं पीयूषपानारतं
पीयूषप्रदवित्तनाथभजितं पीयूषकर्तृत्सवम् ॥
वेद्यं वेदविभागभूसुरकृपासंयुक्तविद्वज्जनैः
कार्याकार्यविचारदं विधिमहं ब्रह्माणमाद्यं भजे ॥ ४ ॥

अहम् उङ्कारं ब्रह्माणं भजे इति सम्बन्धः। तस्य सर्गानुकूलरजःप्रधानसत्त्वमूर्त्तित्वात्तदनुरूपवेदभागैस्तदधिकारिभिः कर्मठैश्चोपास्यत्वमाह

*वेदविभागभूसुरकृपासंयुक्तविद्वज्जनैर्वेद्यमिति* । वेदानां कर्मोपासनाज्ञानकाण्डात्मकानां कर्मकाण्डात्मको यो विभागः तेन भूसुरेषु ब्राह्मणेषु दानपात्रेषु कृपासंयुक्ताः अन्नगोभूहिरण्यादीनां सदैव यज्ञेषु च दातारो ये कर्मठा विद्वज्जनास्तैर्वेद्यं सदैव विभाव्यं ज्ञेयं सत्कर्मभिरुपास्यं चेत्यर्थः । कथं ज्ञेयं तत्राह *कार्याकार्यविचारदं विधिमिति* । कर्त्तुं योग्यं कार्यं सत्कर्म ज्योतिष्टोमादि, अकार्यं कर्त्तुमयोग्यं कलञ्जभक्षणादि, तयोः परिग्रहपरिहारसिद्ध्यै तत्त्वनिर्णयाय प्रवृत्तो यः 'अथातो धर्मजिज्ञासे'त्यादिना जैमिन्यादिभिः कृतो विचारस्तं ददातीति विचारदस्तम्, विधिं प्रवर्त्तकनिवर्त्तकश्रौतस्मार्तवाक्यसन्दर्भरूपमित्यर्थः । कथं चोपास्यं तत्राह *पिशिताशनाशकरणमित्यादिविशेषणचतुष्टयेन* । पिशिताशाः असुरराक्षसपिशाचादयो निषिद्धकर्माचरणपरिणतिप्राप्तशरीरास्तामसयोनयस्तेषां नाशकरणं वधबन्धाऽधोगत्यादिदुःखफलप्रदम् । सत्कर्मपरिपाकप्राप्तशरीरदेवत्रैवर्णिकादिभावेन तु पीयूषस्याग्निहोत्राद्याहुतिपरिणतिरूपामृतभावेन सूर्यचन्द्रमण्डलाश्रितस्य सत्कर्मफलस्य विद्ययाऽमृतरूपस्य च पाने उपभोगे आ समन्ताद्देवलोकेषु च रतमासक्तम् । अत एव देवानां पीयूषप्रदाभ्यां चन्द्रसूर्याभ्यां त्रैवर्णिकानां वित्तप्रदैर्वित्तनाथकुबेरेन्द्रादिभिश्चाक्षाप्रतीक्षैर्भजितं सेवितम् । इडुच्छान्दसः । पीयूषकर्तुरमृतजनयितुः क्षीरार्णवस्य उत्सवं उदीयमानचन्द्ररूपेण नयनानन्दोत्सेकहेतुमित्यर्थः । अथवा यज्ञादिना आहुतिपरिणामरूपपीयूषकर्तॄणां कर्मठानां स्वर्गादिफलभावोत्सवहेतुमित्यर्थः ॥ ४ ॥

मङ्कारं मितिमानमेयविधुरं मेयं सदावेदिभि-
र्मन्दोत्साहमशेषजन्तुकृपणं मन्दान्धकारापहम् ॥
मन्दामन्दममत्सरं करुणिकाकान्तं शिवं शङ्करं
कर्पूरस्फटिकाभकान्तिकलितं कर्णोत्सवेशं भजे ॥ ५ ॥

अत्रापि अहम् मङ्कारं शिवं शङ्करं भजे इति सम्बन्धः । तस्य जगत्संहाराधिकारित्वादल्पसंहाराणां नित्यदैनन्दिनप्राकृतप्रलयानां कारणे महातमसि जगदुपसंहाररूपाणां तमोगुणसाध्यत्वेऽपि समूलसर्वजगदुच्छेदलक्षणस्य वैज्ञानिकस्य महाप्रलयस्य विशुद्धतमसत्त्वचरमपरिणतिरूपब्रह्मविद्यामात्रसाध्यत्वाद्विद्याधिपतित्वं तच्छङ्करीत्वं चेति तदनुरूपं विशिनष्टि *कर्णोत्सवेशं करुणिकाकान्तमिति* साधनचतुष्टयसम्पन्नानां श्रवणादिपराणामधिकारिणां श्रोत्रानन्दजनकत्वात्कर्णोत्सवभूता या औपनि-

पदी ब्रह्मविद्या उमा तस्याः ईशं स्वामिनम्। करुणा दया सैव करुणिका विद्येव तया दिव्यमङ्गलविग्रहात्मना परिणतया कान्तं मनोहरम्, तथा चाहुः--

शक्तिः शरीरमधिदैवतमन्तरात्मा
ज्ञानं क्रिया करणमासनजालमिच्छा॥
ऐश्वर्यमावरणमायतनानि च त्वं
किं त्वं न यद्भवसि देवि! शशाङ्क-मौलेः॥ इति।

तन्मूर्तेः शुद्धसत्त्वानुरूपं वर्णमाह *कर्पूरस्फटिकाभकान्तिकलितमिति* ॥ ब्रह्मविद्याश्रयत्वमिव तद्विषयत्वमपि तस्यैवेत्याह *मेयं सदावेदिभिरिति* ॥ सद्ब्रह्म आ समन्तादपरिच्छिन्नानन्दप्रत्यगैकरस्येन विदन्ति साक्षादनुभवन्ति तच्छीलाः सदावेदिनस्तैर्मेयं महावाक्यमानजन्यवृत्तिव्याप्यम्। कथं मेयं तदाह *मितिमानमेयविधुरमिति* ॥ मितिर्वृत्तिर्मानं तदुपादानमन्तःकरणं मेयाः विषयाः एतत्त्रिपुटीरूपसर्वप्रपञ्चरहितं निष्प्रपञ्चमित्यर्थः। किं तन्मितिफलं तदाह *मन्दान्धकारापहमिति* । मन्दानामज्ञानां जन्ममरणाद्यनर्थहेतुर्यो मूलाविद्यारूपोऽन्धकारस्तन्निवारकमित्यर्थः। नन्वविदितमेव तदात्मतत्त्वं स्वप्रकाशापरिच्छिन्नचिद्रूपत्वात्स्वयमेव स्वाज्ञानं निवर्त्तयतु किं तत्त्वज्ञानतत्साधनोद्योगलक्षणेन तदुत्साहेन तत्राह *मन्दोत्साहमशेषजन्तुकृपणमिति* ॥ नाविदितं तत्स्वाज्ञानं निवर्त्तयति यतस्तत् मन्दोत्साहं ज्ञानतत्साधनोत्साहरहितम्। अशेषजन्तुषु सत्तस्वप्रख्यापने अज्ञाननाशे च कृपणम्, कृपणवत्परिमितकर्मफलमात्रप्रदं नापरिच्छिन्नानन्दतत्स्वरूपप्रकाशकमित्यर्थः। तर्हि किं तन्मन्देप्यनूत्येति(?) येन तेषु कृपणम्, नेत्याह *मन्दामन्दममत्सरमिति* । मन्दमज्ञम् अमन्दं तत्त्वज्ञं च स्वयमेव, नहि स्वात्मनि मात्सर्यप्रसक्तिः। साधनोद्योगाभावे फलादानं तु न मात्सर्यापादकं किन्तु साधने फलनैयत्यप्रदर्शनेनोत्साहजननेन प्रवर्त्तकमेवेति भावः॥ ५॥

एवं गुणत्रयाधिष्ठातृब्रह्मविष्णुरुद्रात्मना प्रणवमात्रत्रयमुपवर्ण्य तत्समुदायात्मकमायाधिष्ठातृचैतन्यरूपप्रपञ्चमूलं बिन्दुरीश्वर उच्यते, नामप्रपञ्चमूलं तु नादः सदाशिवः इति विभागमभिप्रेत्य बिन्द्वंशं वर्णयति-

बिन्दुं बिन्दुशतैकधारमनिशं बिन्दूद्भवं बिन्दुगं
बिन्दुब्रह्मविशेषशोभनमतिव्यावृत्तदेहं शुभम्॥
नित्यानित्यविवेकवस्तुसहितं कर्मातिदूरस्थितं
कार्योद्वर्त्तनकर्मदेशविवरं सौषुप्तिकं तं भजे॥ ६॥

*बिन्दुमिति* ॥ अहं बिन्दुं सौषुप्तिकं सुषुप्तिसमष्ट्यात्मकरूपप्रपञ्चकारणं तं जगदीश्वरं भजे इति सम्बन्धः। तत्र बिन्दुशब्दस्य "बिदि अवयवे" इत्येतद्धातुनिष्पन्नस्य निरवयवेऽपि प्रवृत्तिनिमित्तं दर्शयति *बिन्दुशतैकधारमनिशमिति* अनिशं सदैव, सर्वप्रपञ्चवैचित्र्यहेतुविचित्रवासनाः बिन्दुशतशब्देनोच्यन्ते, तासां मायावयवप्रायत्वात्तदुपहितं ब्रह्म बिन्दुशतैकधारम्। तदेव ब्रह्मवासनाबिन्दूनां समष्टिव्यष्टिलिङ्गस्थूलदेहाकारेणोद्भवेतदुपहितहिरण्यगर्भाद्याकारेणोद्भवात् बिन्दूद्भवम्। सुप्तिलययोस्तद्वासनामात्रे जीवावस्थिते बिन्दुगम्। अनिशमिति त्रिष्वपि सम्बध्यते। तदेव ब्रह्म नित्यानित्यविवेकोपलक्षितसाधनचतुष्टयवस्तुसहितं सर्वकर्मसंन्यासेन कर्मातिदूरस्थितं सत्, श्रवणादिना कार्योद्भवनस्य सर्वकार्यनिवर्त्तकस्य असङ्गाकर्तृकूटस्थात्मविवेकवतो मनसः कर्मदेशस्य सर्वकर्मोत्पत्तिस्थानस्य प्राणस्य च विवरं छिद्रमाकाशवदसङ्गाधारभूतं सत्, स्वतत्त्वबोधेन सवासनमायानिवृत्तौ अतिव्यावृत्तस्थूलसूक्ष्मदेहं, बिन्दुब्रह्मणोर्यो विशेषः व्यावृत्तिः बिन्दोर्निःस्वरूपता ब्रह्मणो निर्वासनता च तेन शोभमानं शुभं निरतिशयतत्प्रकाशानन्दैकरसं भजे इत्यर्थः ॥ ६ ॥

उक्तं नादांशं वर्णयति—

नादं नादितशास्त्रछन्दधरणं शास्त्रैकवेद्यं शुभं
शास्त्रावादिकृपालुपादरसिकैः साक्षात्कृतं सर्वदा ॥
शास्त्रं शासनरूपदिव्यममलं प्रोत्साहनोद्दण्डनं
शब्दब्रह्म निरस्तदोषममलं नित्योत्सवेशं भजे ॥ ७ ॥

*नादमिति* ॥ अत्रापि अहं नादं शब्दब्रह्म भजे इति सम्बन्धः। तस्यानुग्राहकसदाशिवरूपत्वात्तदनुरूपं विशिनष्टि *नित्योत्सवेशमिति*। नित्यमुत्सवो निरावरणनिरतिशयानन्दाविर्भावो यस्याः सकाशात्सा नित्योत्सवाऽविद्या तस्याः ईशं स्वामिनम्। अत एव निरस्ताविद्यावरणविक्षेपदोषम्। अमलं कामकर्मवासनादिमलरहितम्। कथं निरस्तदोषं कथं चामलं? तत्राह *शास्त्रं शासनरूपदिव्यममलमिति* तदेव परारूपं नादब्रह्म पश्यन्तीमध्यमावैखरीतिक्रमेण वेदादिविद्यास्थानात्मनाऽभिव्यक्तं शास्त्रं सत्, तच्छासनरूपेण कर्मोपासनश्रवणमननादिना साक्षात्कारान्तव्यापारेणाभिव्यक्तस्वतत्त्वं दिव्यं द्योतमानस्वरूपम्, अविद्यादिदोषमलनिरासादमलमित्यर्थः। न केवलं शासनरूपमेव शास्त्रं किन्तु प्रोत्साहनोद्दण्डनम्—विहितेषु ज्योतिष्टोमादिकर्मसु पुरुषप्रवृत्तिसिद्धये विचित्रैः स्वर्गादिफलैर्बहुविधस्तोत्रशस्त्रमन्त्रार्थवादैश्च पुरुषप्रोत्साहनम्, निषिद्धब्रह्म-

त्या
ह्युकलत्रभक्षणादिषु प्रवृत्तानां यमतद्भयादिरूपेण रौरवादिनरकैश्च शूकरादिजन्मभिश्चोत्कृष्टदण्डनप्रवर्त्तकमित्यर्थः । कथं तन्नाम ब्रह्मशास्त्रं कथं वा शासनरूपं दिव्यं ? तत्राह *नादितशास्त्रवृन्दधरणं शास्त्रैकवेद्यमिति* ॥ यतः सर्वशास्त्रवृन्दं नादितं नादव्याप्तमुपलभ्यते अतो नाद एव शास्त्रात्मना स्थित इति तद्धरणं गम्यते, यथा स्वर्णविकारकुण्डलकटकादिभावेन स्वर्णमेव तद्धरणं तद्वत् । यतश्च तच्छुभं ब्रह्म शास्त्रैकवेद्यं तदभिव्यज्यते अतः शासनरूपं दिव्यमित्यर्थः ॥ कीदृशैरधिकारिभिस्तच्छास्त्रवेद्यं तत्राह *शास्त्रायादीति* ॥ शास्त्रं आसमन्ताद्वदन्ति व्यक्तं व्याचक्षते तच्छीलाः कृपालवश्च ये कृतसाक्षात्कारा गुरवस्तदीयपादरसिकैः साधनचतुष्टयसंपन्नैरधिकारिभिः श्रवणादिक्रमेण सर्वदा साक्षात्कृतं स्वात्मरूपेणेत्यर्थः ॥ ७ ॥

शक्तिं शक्तिनिरासमीशनिलयं विश्वस्य निर्भेदकं
विश्वोत्पत्तिविनाशजीवनकरं विश्वाभिधं शाश्वतम् ॥
विश्वत्राणपरायणां विमलसन्मानुष्यचित्तस्थितं सत्यं
नित्यमशेषजन्तुविबुधं चोङ्कारमात्रं भजे ॥ ८ ॥

अत्रापि परारूपस्य नादात्मकस्य शब्दब्रह्मणः कारणीभूतां कुण्डलिनीरूपां शक्तिं सार्द्धत्रिमात्राधिष्ठानसार्द्धत्रिवलयाकारचिद्रूपमाद्यम् ॐकारं भजे इति सम्बन्धः ॥ स च शक्त्यात्मक ॐकारः भोगासक्तानां कर्मकाण्डात्मना प्रवृत्तिशक्तिरूपो विश्वगः सन् विश्वोत्पत्तिविनाशजीवनकरो विश्वाभिधः प्रपञ्चनामक एव, मुमुक्षूणां तु ईशनिलयः विश्वेश्वरचिदात्मनिष्ठः सन् जगद्बीजमायाशक्तिनिरासात्कार्यस्य विश्वस्य निर्भेदको विनाशक इति बोधनाय तथा तथा विशनष्टि-विश्वगं विश्वोत्पत्तिविनाशजीवनकरमीशनिलयं शक्तिनिरासं विश्वस्य निर्भेदकमिति च । अत एव सर्वप्राणिकर्मज्ञानफलदानाय अशेषजन्तून्विबुध्यत इति अशेषजन्तुविबुधम्। विश्वस्य त्राणे तत्तदनुरूपलक्षणं तत्तदनुरूपलक्षणैः परायणाः सन्तो मनुष्या एव मानुष्यास्तेषामुपास्यतया ज्ञेयतया च चित्तस्थितं परमार्थतः सत्यमाद्यं तं भजे इत्यर्थः ॥ ८ ॥

अर्द्धमात्रामपात्रां च देवतां विजनोज्वलाम् ॥
ॐकाररूपिणीं देवीं नित्यं वन्दे सुनिर्मलाम् ॥ ९ ॥

तादृशविद्याशक्तिफलजीवन्मुक्तौ दग्धपटवज्जगदाभासस्याप्यबाध्यस्तत्वानुसन्धाने साभास्यार्द्धमिवावशिष्टा ब्रह्मचिद्दैवता मीयत इत्य-

र्द्धमात्रा सा, अत एव (सा) विजनेन द्वैताजननेन तद्वेत्वविद्यानिरसनेन योज्वला तथाविधां तां सुनिर्मलां ॐकाररूपिणीं देवीं नित्यं वन्दे इत्यर्थः

स एवार्द्धमात्रात्मा प्रणवो येन रूपेण जीवन्मुक्तैरनुभूयते तेनाभिख्य दर्शयंस्तथा तदुपासनं कार्यमित्याशयेनाह—

कलावन्तं कलारूपं कालाकालमकालकम् ॥
कल्पाकल्पविशेषज्ञं प्रणवं निर्मलम्भजे ॥ १० ॥

*कलावन्तमिति* ॥ ब्रह्मविद्ब्रह्मविद्वरः ब्रह्मविद्वरीयान् ब्रह्मविद्वरिष्ठ इति तत्त्वज्ञानदार्ढ्यं तारतम्येन चतुर्द्धाप्रसिद्धजीवन्मुक्तात्मनां कल्पाकल्पविशेषज्ञं तं निर्मलं प्रणवं भजे इति सम्बन्धः । कल्पनं कल्पः व्युत्थानदशायां द्वैतावभासः, अकल्पः समाधौ द्वैतानवभासः, तदुभयविशेषज्ञमित्यर्थः । तत्राद्यजीवन्मुक्तानुभवेन अमात्राद्यष्टविधकलावन्तम् । द्वितीयानुभवेनार्धमात्रात्मकैककलारूपम् । तृतीयानुभवानुरोधेन व्युत्थानसमाधिकालवैचित्र्यमात्राभासात्तत्साक्षिणि तदभावाच्च कालाकालम् । चतुर्थस्य व्युत्थानसमाधिभेदस्यापि विलये कलनीयाभावात्कालस्याप्यकल्पने अकालकम् । इत्थं निर्मलश्चिदेकरसघनं प्रणवं भजे इत्यर्थः ॥१०॥

नवमी मात्रा तु शान्ताख्या विदेहमुक्तस्वरूपानन्दैकरसभूमात्मिका न वाङ्मनसगोचरः, किन्तु तादृशस्वरूपानुभवैकसिद्धेत्युपास्या ज्ञेया चेत्याशयेनाह--

शान्तं निर्मलमाकाशवाङ्मनसगोचरम् ॥
स्वानुभूत्यैव वेद्यं च ब्रह्मैवाहमिति स्मरेत् ॥ ११ ॥

*शान्तमिति ॥ ११ ॥

ॐकारमात्रामालिकास्तवपठनफलमाह--

सूत उवाच—

ॐकाराक्षरमालिकामन्त्रं यः पठते यतिः ॥
ऐन्द्रं सारस्वतं प्राप्य शाश्वतं पदमश्नुते ॥ १२ ॥

इति प्रणवाक्षरमालामन्त्रः ।

ॐ*काराक्षरेति* अक्षरशब्दो मात्रापरः । मन्त्रशब्दश्च रहस्यस्तोत्रपरः । पठते इति पदव्यत्ययश्छान्दसः । इन्द्रः परमेश्वरस्तत्सम्बन्धि ऐन्द्रं, सरस्वत्याः सम्बन्धि पाण्डित्यं सारस्वतं सार्वज्ञमिति यावत् । शाश्वतं पदं मोक्षं तत्त्वज्ञानद्वारा अश्नुते प्राप्नोतीत्यर्थः ॥१२॥

इति प्रणवाक्षरमालिकाव्याख्या समाप्ता ॥

सूत उवाच--

अथातः सम्प्रवक्ष्यामि प्रणवब्रह्मणो द्विजाः ! ॥
अनुस्मृतिं मोक्षदात्रीं स्मृत्वा यान्त्यपुनर्जनिम् ॥ १ ॥

अनुस्मृतिं वर्ण्यमानतत्तद्गुणविशिष्टतया स्मरणहेतुं ग्रन्थम् । अपुनर्जनिं पुनर्जन्माभावं मोक्षमिति यावत् ॥ १ ॥

अग्रे सृष्टेः प्रपञ्चस्य य आस्ते वटबीजवत् ॥
सर्वभूतमयो दिव्यः प्रणवं संस्मरेद्यतिः ॥ २ ॥

प्रपञ्चस्य सृष्टेरग्रे प्राक् वटबीजवत्सूक्ष्मावस्थापन्नसर्वभूतमयो यः आस्ते तं प्रणवं संस्मरेदिति सम्बन्धः । तस्याचेतनप्रधानात्मकत्वव्यु- दासाय विशिनष्टि दिव्य इति । स्वप्रकाशचिदेकरसतया द्योतमान इत्यर्थः ॥ २ ॥

तर्हि स किं वटबीजवत्परिणामी नेत्याह-

यथा रज्जुरहेर्विप्रा ! विश्वस्यापि तथा नवः ॥
आधारोऽतो विभिन्नस्तं प्रणवं संस्मरेद्यतिः ॥ ३ ॥

*यथेति*॥ यथा रज्जुः स्वविवर्त्तस्याहेः तथा सर्वस्याधारः अधिष्ठा-॥ नम्, अत एव विभिन्नः अत्यन्तं जगतो विलक्षणः सत्यः, नवः अजरः ॥३

'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतय एतदर्थपरा इति दर्शयंस्तदज्ञानकृतानर्थस्य तद्ध्यानेन निवृत्त्युपपत्तेः प्रमाणसाफल्यमप्येवं सति सिध्यतीत्याशयेनाह-

यद्विवर्त्तः प्रपञ्चोऽयं येन जीवति सर्वतः ॥
यद्ध्यानान्नाशमायाति प्रणवं संस्मरेद्यतिः ॥ ४ ॥

*यद्विवर्त्त इति* । यद्ध्यानात् यत्साक्षात्काराद्नाशं बाधम् ॥ ४ ॥

एवं च तस्य जगदुपादानत्ववादोऽप्यज्ञदृष्ट्यैव तत्त्वदृशा तु नि- ष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमित्यादिश्रुतिवादा इत्याशयेनाह-

उपादानं महादिव्यं यमाहुर्मुग्धमानसाः ॥
निष्कलं विभुमात्मानं प्रणवं संस्मरेद्यतिः ॥ ५ ॥

*उपादानमिति* महानपरिच्छिन्नो यो दिवि द्योतनात्मके चि- त्स्वभावे दिव्यस्तं, निष्कलं निरवयवम् ॥ ५ ॥

'स य इमांस्त्रीन्लोकान्पूर्णानतिगृह्णीयात् सोऽस्या एतत्प्रथमं पद- माप्नुयादि'त्यादिश्रुतिबोधितमहाप्रभावां गायत्रीमपि सम्यक् परित्यज्य

यतीश्वराः यं प्रणवं जपन्ति, यतः प्रणवः साक्षान्मोक्षस्वरूपः, गाय-त्री तु साक्षात्कर्मोपासनफलात्मकसगुणब्रह्मप्राप्तिहेतुरित्याशयेनाह—

गायत्रीं सम्परित्यज्य यं जपन्ति यतीश्वराः ॥
साक्षान्मोक्षस्वरूपं तं प्रणवं संस्मरेद्यतिः ॥ ६ ॥

*गायत्रीमिति* ॥ ६ ॥

गायत्र्यादिक्षुद्रमन्त्राः कलां नार्हन्ति षोडशीम् ॥
यत्प्रभावमहाम्भोधेः प्रणवं संस्मरेद्यतिः ॥ ७ ॥

अत एव प्रणवप्रभावमहार्णवस्यापारत्वात् गायत्र्यादयः मायिक-क्षुद्रसगुणब्रह्मभावफलत्वाद्यपेक्षया क्षुद्रमन्त्राः षोडशीमपि कलां नार्हन्तीत्युक्तिरपि अल्पोक्तिः ॥ ७ ॥

यस्मादृते न चेदं स्यादृते रज्जुं यथा फणी ॥
यत्सत्तातो जगत्सत्ता प्रणवं संस्मरेद्यतिः ॥ ८ ॥

अज्ञाताद्यस्मादृते अज्ञातं यं विनेत्यर्थः । व्यतिरेकोक्तमन्वयेनाह *यत्सत्तात इति* ॥ ८ ॥

ज्ञाते विशेषणाभावप्रयुक्तविशिष्टाभावरूपव्यतिरेकसिद्धिरित्याश-येनाह—

साक्षात्कृत्य यमात्मानं न पश्यन्ति यतीश्वराः ॥
जीवभेदं विश्वभेदं प्रणवं संस्मरेद्यतिः ॥ ९ ॥

साक्षात्कृत्येति ॥ ९ ॥

अनादिप्राप्तकर्माणि शिखासूत्रादिकान्यपि ॥
यस्मै त्यजन्ति सावित्रीं प्रणवं संस्मरेद्यतिः ॥ १० ॥

यस्मै मोक्षरूपं यमुद्दिश्य त्यजन्ति ॥ १० ॥

'सर्वे वेदा यत्पदमामनन्ति, तत्तु समन्वयादि'त्यादिश्रुतिसूत्रदर्शिता सर्ववेदवेदान्तानां परमपुरुषार्थावसानलक्षणस्तात्पर्येण समन्वयोऽपि यत्रैव नान्यत्रेति स्मरेदित्याशयेनाह—

यत्र प्रतिष्ठितो विप्राः ! सर्ववेदसमन्वयः ॥
तात्पर्येण न चान्यत्र प्रणवं संस्मरेद्यतिः ॥ ११ ॥

*यत्रेति* ॥ अन्यत्र नानातार्किकवादिप्रविकल्पितप्रधानपरमाणु-विज्ञानशून्यकालस्वभावमितियदृच्छाभूतपुरुषादौ ॥ ११ ॥

नानावादिभिः प्रधानपरमाणवादिभावेन विकल्पमानं जगत्कारणं तत्त्वतो विमृश्यमानं प्रणवब्रह्मैव पर्यवस्यतीत्याशयेनाह—

स्वस्वाभिमतमार्गेण यं वदन्ति विवादिनः ॥
जगदादिमनादिं तं प्रणवं संस्मरेद्यतिः ॥ १२ ॥

*स्वस्वाभिमतमार्गेणेति* । मार्गेण तत्तत्प्रक्रियया यं प्रणवमेव जगदादिं जगत्कारणं वदन्ति। वस्तुतस्तु "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमित्यादिश्रुतेरनादिम् ॥ १२ ॥

तस्य तटस्थतां विहाय सर्वमहावाक्यार्थभूतः परमपुरुषार्थोपयोगिप्रत्यगभेदः स्मर्तव्य इत्याह—

वेदा वदन्ति येनैक्यं यस्य जीवस्य नो भिदा ॥
जीवो यो यत्परं ब्रह्म प्रणवं संस्मरेद्यतिः ॥ १३ ॥

*वेदा इति* ॥ वेदाश्चतुर्वेदगतसर्वमहावाक्यानि येन प्रणवब्रह्मणा सह जीवस्यैक्यं वदन्ति, यतो यस्य जीवस्य च विरुद्धोपाधिद्वयशोधने चिदेकरस्यपरिशेषान्नो भिदा । अज्ञानबाधपर्यन्तमेव भ्रान्त्या जीवः, ज्ञानदशाऽपेक्षणे तु यत्सदैव परं ब्रह्मेति प्रणवं यतिः संस्मरेदित्यर्थः ॥१३॥

श्रुतिस्मृतिभ्यां विहितो यदैक्यज्ञानसिद्धये ॥
गायत्र्यादिपरित्यागः प्रणवं संस्मरेद्यतिः ॥ १४ ॥

मुमुक्षूणां मोक्षसाधनस्य यदैक्यज्ञानस्य सिद्ध्यै पारमहंस्यविधायकश्रुतिस्मृतिभ्यां गायत्र्यादिसर्ववेदकर्मवित्तपुत्रादिपरित्यागो विहितस्तं प्रणवम् ॥ १४ ॥

ब्रह्मविष्ण्वादिभेदेन यो भाति जगतां पतिः ॥
ब्रह्मादयो यं जपन्ति प्रणवं संस्मरेद्यतिः ॥ १५ ॥

किं बहुना ब्रह्मविष्णुरुद्रादिसर्वदेवभेदेन यः प्रणवो भाति, य एव सर्वजगतां पतिः स्वामी,ब्रह्मादयः सर्वे देवा ऋषयो यतयश्च यं जपन्ति, एवं महाप्रभावोऽयं प्रणव इति संस्मरेदित्यर्थः ॥ १५ ॥

सूत उवाच—

य इमामनुसन्धत्ते यतिर्नित्यमनुस्मृतिम् ॥
ऐन्द्रं सारस्वतं प्राप्य शाश्वतं फलमश्नुते ॥ १६ ॥

ऐन्द्रं सारस्वतं प्राप्य शाश्वतं फलमश्नुते प्राप्नोति, इन्द्रः परमेश्वरस्तत्सम्बन्धि यतिर्यथोक्तं तदनुरूपं फलमश्नुते प्राप्नोति,

न्द्रि पेन्द्रं, सरस्वत्याः विषयं सारस्वतं सर्वशास्त्रतदर्थज्ञानं प्राप्य शाश्वतं नित्यं निरतिशयानन्दं मोक्षफलमश्नुते प्राप्नोति ॥ १६ ॥

अनुस्मृतिं महादेव्यै इत्येवं शम्भुरब्रवीत् ॥ १७ ॥

इति प्रणवानुस्मृतिः ॥

इत्येवंरूपामनुस्मृतिं शम्भुर्महादेव्यै अब्रवीदिति साम्प्रदायिकमप्यनुस्मर्त्तव्यमित्याशयः ॥ १७ ॥

इति अनुस्मृतिव्याख्या समाप्ता ॥

ॐकारजञ्जपूकानां जप्यान्यङ्गानि सर्वशः ॥
सूतेन सम्यगुक्तानि ईश्वरेणैव पार्वतीम् ॥ १ ॥

पूर्वोक्तान्यङ्गस्तुत्याद्यनुस्मृत्यन्तानि प्रणवोपास्त्यङ्गानि यस्मात्साक्षादीश्वरेणैव पार्वतीं प्रति सम्यगुक्तानि, सूतेन च शौनकादिमुनिभ्यः सम्यगुक्तानि, अतः ॐकारजञ्जपूकानां तान्यवश्यं जप्यानीत्यन्वयः ॥१॥

पार्वत्यङ्गानि सर्वाणि जप्त्वा दिव्यानि सर्वशः ॥
आनन्दं परमं प्रापुर्यथैते मुनिसत्तमाः ॥ २ ॥

हे पार्वति! पूर्वोक्तानि दिव्यानि इमानि सर्वाण्यङ्गानि शौनकादयो मुनयो जप्त्वा प्रणवोपास्त्या सर्वशः सर्वप्रकारेण तच्चिन्तनतत्स्मरणतत्प्रबोधनसमाधिसाक्षात्कारान्तैः सर्वप्रकारैरिति यावत्, परमं निरतिशयानन्दं यथा प्रापुस्तथा ते वर्णयिष्यामीत्यर्थः। ननु उपक्रमे मुनिभिः पृष्टेन सूतेन

अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
पुरा गौर्या महादेवः पृष्टो व्याचष्ट भूसुराः! ॥

इति सूक्तोक्त्यपेक्षया गौर्यै ईश्वरकृतः उपदेशः पूर्वकालः प्रतिपादितः, इह तु तद्वैपरीत्यमिति पूर्वापरविरोधः। सत्यम्। प्रतिज्ञापरं व्यासावतारसूतमुन्युपदेशाद्दिव्यवहारस्य समाननामरूपस्याऽनादेः सम्भवाद्दोषः ॥ २ ॥

श्रुत्वेदं मुनिशार्दूलाः सन्तोषमतुलं ययुः ॥
केचित्सूतं प्रशंसन्ति चक्रुरालिङ्गनं परे ॥ ३ ॥

सन्तोषं निरतिशयानन्दम् ॥ ३ ॥

मेनिरे केचिदेतेन तुल्यो नास्तीति सर्वशः ॥
केचिद्व्यासस्य माहात्म्यमिदमित्याहुरादरात् ॥ ४ ॥

इदं सूतस्य प्रणवतत्त्वज्ञानम् ॥ ४ ॥

अन्येऽप्योङ्काररूपेण निश्चिन्वन्ति स्म सूतकम् ॥५॥

अज्ञातः सूतः सूतकस्तम् ॐकाररूप एवायमिति प्रागज्ञातं सूतमित्यर्थः। अज्ञाते स्वार्थे कन् ॥ ५ ॥

पठन्तु शृण्वन्तु च वाचयन्तु लिखन्तु गायन्तु च बोधयन्तु ॥
ॐकारकल्पं यतिवृन्दसेव्यं सूतोक्तमीशोक्तमनिन्दितं च ॥६॥

पठन्तु शृण्वन्त्विति प्राग्व्याख्यातम् ॥६ ॥

इति श्रीस्कन्दपुराणे वैष्णवसंहितायां मन्त्रप्रस्तावे प्रणवकल्पे तृतीयोऽध्यायः ॥ ३ ॥

इतिश्री प्रणवक० प्रकाशे तृतीयोऽध्यायः ॥ ३ ॥

प्रणवः परमं ब्रह्म प्रणवः परमः शिवः ॥
प्रणवो परमो विष्णुः प्रणवः सर्वदेवताः ॥ १ ॥

प्रणवः परमं ब्रह्मेति प्राग्व्यातम् ॥ १ ॥

मुनय ऊचुः—

पुरश्चर्यां चरित्वा तु पार्वती जप्तृनायिका ॥
अलभिष्ट महानन्दमित्यवोचद्भवान्किल ॥ २ ॥
कथं प्राप महानन्दं पार्वती तां विधां वद ॥
आनन्दं कीदृशं प्राप कथं प्राप्नोति वा वद ॥ ३ ॥
इत्युक्तो मुनिभिः सूतस्तं प्रकारमभाषत ॥

सूत उवाच—

अथातः सम्प्रवक्ष्यामि यतीनां मुक्तिदायिनीं ॥ ४ ॥

अथातः सम्प्रवक्ष्यामि यतीनां मुक्तिदायिनीं ॥ ४ ॥ ब्रह्मवि- जप्तृणामुपासकानां जपफलब्रह्मविद्याधिदेवतात्वान्नायिका ब्रह्मविद्याफलप्राप्तिका स्वामिनी अलभिष्ट लब्धवती, लभेरनिद्कत्वादिट् दीर्घौ छान्दसौ। तां विधां तं प्रकारं वद। यादृशमानन्दं पार्वती प्राप तादृशं अस्मदादिरप्युपासकः कथं प्राप्नोति तद्वदेत्यर्थः। तं प्रकारं वक्ष्यमाणप्रणवगीतामुखेन अभाषत व्यक्तमुक्तवान्। प्रणवगीतामेव तां वक्तुं प्रतिजानीते अथात इत्यादिना ॥२॥३॥४॥

ॐकारगीतां या गीता गीता मुक्तिं प्रयच्छति ॥
जेगीयतां गीयमाना गायतस्त्रायते सदा ॥ ५॥

या ॐकारगीता पठिता सती मुक्तिं प्रयच्छति सा जेगीयतां पुनःपुनरतिशयेन गीयताम्। गीतेः क्रियासमभिहारे यङ्, कर्मणि लोटि ईत्वे द्वित्वे अभ्यासस्य गुणः। यतो गीयमाना गायतः पुरुषांस्त्रायते सदा ॥५॥

प्रतिज्ञातार्थं वक्तुमाख्यायिकामुखेनोपक्रमते—

कदाचिदीश्वरी गौरी विजने शुचिबुद्धिदे ॥
गुहायां हैमवत्यां च ध्यायन्ती ब्रह्म तारकम् ॥ ६ ॥

*कदाचिदित्यादिना* ॥ शुचिबुद्धिदे बुद्धिप्रसन्नताहेतुत्वाद्ध्यानानुकूले इति यावत्, चकरात्स्वहृद्गुहायां च, तारकं ब्रह्म प्रणवम् ॥६॥

निर्गुणं स्वात्मरूपेण तिष्ठति स्म सदा शुचिः ॥
ध्यायं ध्यायं संस्थिताया प्रणवं ध्यानचेतसः ॥ ७ ॥

प्रणवं ध्यायं ध्यायं पुनः पुनरतिशयेन ध्यात्वा, आभीक्ष्ण्ये णमुल्। नित्यवीप्सयोरिति द्विर्वचनम्। ध्यान एव आसक्तं चेतो यस्यास्तथाविधायाः महन्महः आविरासेति परेणान्वयः ॥ ७ ॥

विश्वं ब्रह्ममयं सर्वमभिन्नं निर्विभेदकम् ॥
पश्यन्त्यास्तत्र पार्वत्या आविरास महन्महः ॥ ८ ॥

तत्र तस्मिन्ध्याने सर्वं विश्वं जगत्स्वात्माभिन्नं ब्रह्ममयं ब्रह्मस्वभावेन परिणतम्, अत एव निर्विभेदकं परस्परव्यावर्त्तकसर्वधर्मशून्यं पश्यन्त्याः महत् अपरिच्छिन्नं महः प्रणवब्रह्म ज्योतिः साक्षादाविरास ॥ ८ ॥

तदेव वर्णयति—

सर्वत्रगं सर्वरूपं निर्मलं निरुपद्रवम् ॥
सत्यं ज्ञानमनन्तं च मनोवाचामगोचरम् ॥ ९ ॥

*सर्वत्रगमिति*। देशकालकृतपरिच्छेदाभावात्सर्वरूपम्, आवरणाभावान्निर्मलम्, विक्षेपाभावान्निरुपद्रवम्, अबाध्यत्वात्सत्यम्, जाड्याभावात् ज्ञानम्, अतः सजातीयविजातीयस्वगतभेदरहितत्वादनन्तम्, अत एव मनोवाचामगोचरम् ॥ ९ ॥

अद्वैतं मोक्षरूपञ्च प्रत्यग्रूपममेयकम् ॥
चिद्रूपमंशहीनं च जीवेशादिभिदापहम् ॥ १० ॥

यतः द्वैतात्मकसर्वबन्धशून्यत्वादद्वैतं, तत एव मोक्षरूपम्। तत्र सर्वद्वैतैः सह प्रतीचोऽपि निवृत्तौ अपुरुषार्थत्वशङ्कां वारयति *प्रत्यग्रूपमिति*। मेयांशस्य जडस्यैव निवृत्तिर्न चिदंशस्येति दर्शयितुमाह *अमेयकमिति*। तर्हि किं मातृरूपं? नेत्याह *चिद्रूपमिति* तर्हि तत्किं शोधित

जीवतत्त्वमाद्यं सांख्याभिमतं ? नेत्याह *जीवेशादीति* । परिच्छेदपारोक्ष्यादिविरुद्धधर्मपरित्यागेनापरिच्छिन्नस्वप्रकाशनिरतिशयानन्दात्मकाखण्डमहावाक्यार्थस्वरूपमित्यर्थः ॥ १० ॥

प्रपञ्चे दृश्यमाना ये पदार्था मानुषादयः ॥
सुरासुरप्रभृतयो भेददर्शनगोचराः ॥ ११ ॥

अतत्त्वज्ञातृदशायां भेददर्शनगोचरा ये मानुषादयः सुराऽसुरप्रभृतयश्च ते तस्यां तत्त्वदर्शनदशायां रुद्राण्या दृष्टिपथं नागता इति परेणान्वयः ॥ ११ ॥

तस्यां दशायां रुद्राण्या न दृष्टिपथमागताः ॥
यथा पश्यन्ति नानार्थानविद्याग्रस्तचेतसः ॥ १२ ॥

उक्तमेवार्थं स्पष्टं पुनराह *यथेति*। अविद्यायां ग्रस्तं चेतो मानसविवेको येषां ते जना यथा नानार्थान्पश्यन्ति तथा नेत्यनुषङ्गः ॥ १२ ॥

कथं ते पश्यन्ति ? तदाह—

जीवोऽन्य ईश्वरोऽप्यन्य इत्येवं ध्वस्तदृष्टयः ॥
विदेहमुक्तिवेलायां जीवन्मुक्तौ च तापसाः ! ॥ १३ ॥

*जीवोऽन्य इति* ॥ जीवः प्राणानां धारक इति संसारी अन्यस्तन्नियन्ता ईश्वरोऽपि अन्य इत्येवं पश्यन्ति, ततस्ते अविवेकध्वस्तदृष्टय इत्यर्थः । विवेकिनां तत्त्वविदां तर्हि कीदृशी स्थितिस्तामाह *विदेहमुक्तिवेलायामिति ।* हे तापसाः ! विदुषां तु विदेहमुक्तिवेलायां जीवन्मुक्तौ ध्यानकाले समाधिदशायां यादृक्स्थितिस्तादृगेव सदा स्थितिरिति परेणान्वयः ॥ १३ ॥

ध्यानकाले स्थितिर्यादृक् तादृगेव स्थितिः सदा ॥
भर्तृभार्यादिसम्भेदो गुरुशिष्यादिभिन्नता ॥ १४ ॥

विदेहमुक्त्यादौ हि कीदृशी स्थितिस्तामाह *भर्त्रिति* ॥ १४ ॥

वेदशास्त्रादिभेदो वा तदा नो भाति किञ्चन ॥
एतन्निदानमज्ञानं यतो नष्टं विवेकतः ॥ १५ ॥

तदा–तस्यां दशायाम् । कुतो नो भाति ? तत्राह *एतदिति* । विवेकतः–त्वंपदार्थविवेकसाध्यतत्त्वसाक्षात्कारतः ॥ १५ ॥

उपादाननाशेन तत्कार्यविनाशे दृष्टान्तद्वयमाह—

मृद्विनाशे घटो यद्वद्रज्जुनाशे यथा फणी ॥
एतस्मिन्नेव काले तु प्रादुरास शुचिश्रवाः ॥ १६ ॥

लोकोपकारकाराय दिव्या वागशरीरिणी ॥

*शुचिश्रवा इति* ॥ एतस्मिन्नेव देव्यास्तत्त्वसाक्षात्कारविश्रान्तिकाले, शुचिश्रवाः विशदश्रवणयोग्या, अशरीरिणी दिव्या वाक्, लोकानां श्रवणादितत्परजनानामुपकारं तत्त्वप्रतिष्ठानलक्षणं करोतीति लोकोपकारकारो दृढविश्वासस्तस्मै प्रयोजनाय प्रादुरास ॥ १६ ॥

वागुवाच—

भो भो देवि ! कृतार्थाऽसि गुरुकारुण्यलेशतः ॥ १७ ॥

अधिकारिबुद्धिकृतार्थतादिरेवात्र देव्याः कृतार्थत्वेनोत्प्रेक्ष्योच्यते १७

नष्टाज्ञाना नष्टकार्या नष्टजीवादिभेदिमा ॥

नष्टकामादिदौर्गुण्या असि त्वं परमेश्वरि ! ॥ १८ ॥

मज्जपप्रभवादेवं प्रादुरास महन्महः ॥

एवंप्रभावो मज्जप्ता तस्मान्मामेव सञ्जपेत् ॥ १९ ॥

मज्जपप्रभवात्तत्त्वसाक्षात्कारादिति शेषः । मज्जपो यस्मादेवंप्रभावस्तस्मान्मामेव मुमुक्षुः सञ्जपेत् ॥१८॥१९॥

यतीश्वराश्च गायत्रीं त्यक्त्वा भेदावलम्बनाम् ॥

मामेव सर्वदा शुद्धा जपन्त्यालोचयन्ति च ॥ २० ॥

यो देवो भर्गः नः धियः प्रचोदयात्प्रेरयति तस्य देवस्य सवितुर्वरेण्यं वरणीयं तत्परब्रह्मात्मकं ज्योतिर्धीमहीति ध्यातृध्यानध्येयत्रिपुटीरूपभेदावलम्बनां गायत्रीं त्यक्त्वा जपनिष्ठा यतीश्वराः मामेव जपन्ति, तत्त्वविचारनिष्ठास्तु आलोचयन्ति, विचारयन्ति पश्यन्ति च ॥ २० ॥

मदर्थं चापि मामेव सर्वभेदविनाकृतम् ॥

गायत्रीमपि सावित्रीं शिखां सूत्रं च कर्म च ॥ २१ ॥

यद्यपि ते मदर्थं पर्यालोचयन्ति, तथापि सर्वभेदविवर्जितं मदर्थभूतं मामेवान्वेषयन्ति नान्यमित्यर्थः । यस्मात्पूर्वयतीश्वराः मां असवन्तः पर्यालोचितवन्तश्च, तस्मादिदानीन्तनैरपि अधिकारिभिर्मोक्षवाञ्छा भवेद्यदि, तर्हि गायत्र्यादीनि त्यक्त्वा संन्यस्य अहं जप्य इति परेणान्वयः २१

त्यक्त्वा संन्यस्य जप्योऽहं मोक्षवाञ्छा भवेद्यदि ॥

इदं कल्पं तु सर्वेषां गृहिणां ब्रह्मचारिणाम् ॥ २२ ॥

वनस्थानां यतीनां च पारायणफलं समम् ॥

सकमण्डलुदण्डानां यतीनामेव मज्जपः ॥ २३ ॥

तत्र प्रणवजपे संन्यासिनामेवाधिकारः तत्कल्पश्रवणाध्ययनादौ तु चतुर्णामप्याश्रमाणामित्याह *इदमिति* । पारायणमात्रादङ्गस्तुत्यादौ प्रागुक्तं फलं यस्य तथाविधमिदं कल्पं सर्वेषां समं साधारणम् ॥ २२ २३

कल्पं साधारणं प्रोक्तं पुराणत्वेन हेतुना ॥
सर्वं च मन्मयं देवि ! विश्वस्माच्च विलक्षणः ॥ २४ ॥

पुराणत्वेन हेतुना पौराणिकरहस्यज्ञाने त्रैवर्णिकानामधिकारादि-त्यर्थः । शूद्रस्य तु न रहस्यश्रवणेऽधिकारः, 'न शूद्राय मतिं दद्यादि'-त्यादिनिषिद्धत्वात् । इदानीं प्रणवः स्वस्य सर्वात्मतां ब्रह्मतद्विद्यात्मतां चाह *सर्वञ्चेत्यादिना* ॥ २४ ॥

निर्गुणो निर्विकारोऽहं तद्रूपः सर्वरूपवान् ॥
मत्तोत्पन्नं च यत्किञ्चित्सर्वं च मयि कल्पितम् ॥ २५ ॥

तद्रूपो ब्रह्मविद्यारूपः ॥ २५ ॥

अहमेव विलासेन बद्धो मुक्तश्च सर्वगः ॥
मायावीव स्वयं सर्वं सृष्ट्वा तत्र प्रविश्य च ॥ २६ ॥
संसरामि भ्रमामीव गच्छामीव नमामि च ॥
मूढानां च तथा भामि न गुर्वायत्तचेतसाम् ॥ २७ ॥

विलासेन मायाविलासक्रीडाकौतुकेन यावदज्ञानं बद्ध इव स्वतत्त्वं ज्ञात्वा मुक्त इव च, मायावी ऐन्द्रजालिक इव, तत्र स्वसृष्टचतुर्विधशरीरे प्रविश्य च, संवादिविषयेषु संसरामीव, विसंवादिषु भ्रमामीव, मार्गभेदेषु गच्छामीव, अल्पतरेषु सूचिच्छिद्रादिमार्गेषु नमामि समाविशामि । किं सर्वत्र एवमेव ? नेत्याह *मूढानामिति* । गुरुष्वेवायत्तमधीनं चेतो येषां, गुर्वनुग्रहफलसाक्षात्कारफलशालिचित्तानामिति यावत् ॥२६॥२७॥

यन्मूढानां जगद्भ्रान्तिदर्शनं यच्च तत्त्वविदां तत्त्वदर्शनं तत्सर्वं दर्शनं चिदात्मैक्यनिर्वाह्यमिति द्रष्टतत्त्वनिष्कर्षे चिदात्मैव सर्वं पश्यतीति पर्यवस्यतीत्याशयेनाह—

इदं भ्रान्तं जगद्यस्तु पश्यत्येष स पश्यति ॥
लोकभेदं समुद्दिश्य वक्तृता प्रतिवक्तृता ॥ २८ ॥

*इदमिति* । यस्तु जीव इदं भ्रान्तं जगत्पश्यतीति प्रसिद्धं तदेव प्रागुक्तोऽहमेव स जीवो भूत्वा पश्यति नान्यः—'नान्योऽतोऽस्ति द्रष्टे'त्या-दिश्रुतेः । एवं गुरुशिष्यादिलौकिकभेदकल्पनया वक्तृता प्रतिवक्तृतापि

तस्यैवेत्याह *लोकभेदमिति* । अथवा यदि द्रष्ट्रादितत्त्वमात्मैव तर्हि तस्यैव वक्तृता प्रतिवक्तृता च कथम् ? न हि स एव तमेव प्रतिपृच्छति समाधत्ते चेत्यादिव्यवहार उपपद्यते, तत्राह *लोकभेदमिति* । व्यावहारिकप्रसिद्धशरीराद्यौपाधिकभेदं सम्यग् उद्दिश्य सिद्धवत्कृत्य गुरुशिष्यादिसंवादरूपा वक्तृता प्रतिवक्तृता च प्रवर्त्तत इत्यर्थः ॥ २८ ॥

सर्वात्मभूतस्य मम इन्द्रादिदेवशरीरेषु पृथक्पृथगभिमानकल्पनेन स्वतत्त्वाज्ञानगर्वादिकं यक्षरूपेणाविर्भूय तृणदहनचालनच्छेदनेष्वग्न्यादीनामसामर्थ्यप्रकटनेन गर्वभङ्गोत्तरं तिरोधाने शान्तदर्पेभ्य इन्द्रादिभ्यो जिज्ञासुभ्य उमामुखेन स्वतत्त्वोपदेशनं च तलवकारशाखिनामुपनिषदि प्रसिद्धमित्याह—

देवि ! केनोपनिषदि एवं संवादिकोमया ॥
इन्द्रादिना पुरा जातो गर्वनिर्वापणाय वै ॥ २९ ॥

*देवीति* ॥ हे देवि ! अहं पुरा पूर्वकालं मच्छक्त्याऽसुरविजयानन्तरमिन्द्रादीनामस्माकमेवायं विजयोऽस्माकमेवायं महिमेत्यद्भुतगर्वनिर्वापणाय एवं यक्षरूपेणाविर्भूय तेषामसामर्थ्यं प्रकटीकृत्य पुनस्तिरोभूय च पुनस्तत्राविर्भूतया इन्द्रेण सह संवादिकया उमया हैमवत्या तेषां गर्वहेत्वज्ञाननाशने निर्मूलं गर्वनिर्वापणायाहं जात इति केनोपनिषदि वै प्रसिद्धमित्यर्थः ॥ २९ ॥

पारमार्थिकदृष्टौ तु नैवं पर्युपपद्यते ॥
एतादृशं स्वरूपं त्वं लप्स्यसे देहपाततः ॥ ३० ॥

पारमार्थिकदृष्टिदशायां तु नैवं वक्तृता प्रतिवक्तृता च पर्युपपद्यते, 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि'त्यादिश्रुतेरित्यर्थः ॥ देहपाततः–देहस्य मिथ्यात्वबुद्ध्यबाधतः ॥ ३० ॥

एवमेव हि यो वेद लभते सोऽपि मां शिवम् ॥
तस्मात्सर्वप्रयत्नेन मदर्थं प्रविचारयेत् ॥ ३१ ॥

मां प्रणवतत्त्वात्मकं, शिवं निरतिशयानन्दम् ॥ ३१ ॥

शृणुयात चापि मन्वीत निदिध्यासनमाचरेत् ॥
मदर्थो यत्र विस्तारो वर्णितो बुधसत्तमैः ॥ ३२ ॥

मदर्थं प्रथमं गुरुमुखाच्छृणुयात, ततः श्रुतार्थदार्ढ्याय मन्वीतापि, ततो निदिध्यासनं विपरीतभावनाच्छेदार्थमाचरेत् इत्यर्थः । यत्र येषु श्रुतिस्मृतिपुराणसूत्रभाष्यादिषु, विस्तीर्यत इति विस्तारः, कर्मणि घञ्,

उपपत्तिभिर्विस्तारिणो मदर्थो वर्णितस्तान् ग्रन्थान् शृणुयात् मन्वीत चेत्यनुषज्यते॥ ३२ ॥

तत्रावस्थात्रयान्वयव्यतिरेकावधारितसदेकस्वभावत्वात्पुरुषस्यैव पारमार्थिकसत्त्वं नावस्थात्रयस्य पुरुषसंसर्गाध्यासेनैव तात्कालिकसत्ताप्रत्ययोपपत्तेरत एव विद्वद्भिर्ध्यानकाले जीवन्मुक्तिरनुभूयते, देहपाते विशेषतः प्रतिभासस्याविच्छेदाद्ब्रह्मानन्दैकरसा मुक्तिः परिशिष्यते इत्याह—

सद्भावो यस्य पुंसोऽस्ति तस्यावस्थात्रयं भवेत् ॥
जीवन्मुक्तिर्ध्यानकाले देहपाते विशेषतः ॥ ३३ ॥

*सद्भाव इति* ॥ यस्य पुंसः स्वसत्तयैव सद्भावोऽस्ति तस्यैव सत्तया यावज्जीवं पर्यायेणावस्थात्रयं भवेत् । ध्यानकाले आविर्भूतेनापरोक्षसाक्षात्कारेण जीवन्मुक्तिश्च भवेत्, देहपाते विशेषतो विदेहमुक्तिश्च भवेन्नात्यन्तासतः परतः सतो वेत्यर्थः ॥ ३३ ॥

न तस्य जन्म दुःखं वा भेदो वा सम्भवत्युमे ! ॥
मुह्यन्ति मूढाः सर्वत्र गुरुशास्त्रपराङ्मुखाः ॥ ३४ ॥

अत एव सदसतोः सम्बन्धायोगादसङ्गस्य तस्य पुंसो जन्म दुःखं ब्रह्मभेदो वा न सम्भवत्येव । एवं स्वाध्यवसाये परात्मतत्त्वे गुरुशास्त्रपराङ्मुखाः मूढा मुह्यन्ति ॥ ३४ ॥

कथं मुह्यन्ति ? तदाह—

अन्यो जीवस्तथा ब्रह्म प्रपञ्चोऽन्य इतीश्वरि ! ॥
नैव पश्यन्ति सचित्ता यतो ब्रह्माद्वयं स्मृतम् ॥ ३५ ॥

*अन्य इति* गुरुशास्त्रानुगतसच्चितास्तु नैवं मुह्यन्ति, यतो गुरुशास्त्रोपदेशाद्विस्मृतकण्ठचामीकरमिव स्मृतं स्वतत्त्वमेव ब्रह्माद्वयमित्यर्थः ॥ ३५ ॥

सर्वोपनिषदो देवि ! गुरुवाक्यं सतां वचः ॥
स्वानुभूतिर्विचारश्च प्रमाणं यदि पार्वति ! ॥ ३६ ॥

अत एव गतिसामान्यपरिज्ञानाय विचारिताः सर्वा उपनिषदः, तत्तात्पर्यप्रदर्शकं गुरुवाक्यं, तदुपबृंहकस्मृतिपुराणसूत्रभाष्यादिरूपं सतां पूर्वाचार्याणां वचः, तदनुगुणा स्वानुभूतिः, तद्दाढ्र्याय पुनः पुनर्विचारश्चेत्येतत्पञ्चकं यदा स्थूणानिखननन्यायेन तत्र दृढतरप्रतिष्ठाकारणमस्ति तदा स्वात्मैव ब्रह्माद्वयं सिद्धमित्युपसंहारः ॥ ३६ ॥

उक्तमर्थं प्रशिशंसिषुः सूत आख्यायिकाशेषमुपवर्णयति—

इत्युक्त्वा विररामासौ दिव्यागमशरीरिणी ॥

सूत उवाच—

गौरीदं वाक्यमाकर्ण्य आश्चर्यं परमं ययौ ॥
वृत्तान्तमिममीशानी ज्ञापयामास शङ्करम् ॥ ३७ ॥

*गौरीत्यादिना* ईशानस्य स्त्री इशानी, पुंयोगादाख्यायां ङीप् ॥३७॥

श्रुत्वा वाक्यं तथा शम्भुः सन्तोषं परमं ययौ ॥
निश्चयामासतुर्विप्राः ! तथेति गिरिजाशिवौ ॥ ३८ ॥

निश्चयामासतुर्निश्चिक्यतुः । निश्चयशब्दात्तत्करोतीति णिचि लिटि 'कास्प्रत्ययादिग्त्यामि 'अयामन्ताल्वाय्येन्त्विष्णुष्विग्त्ययादेशविषये णिलुक्छान्दसः । अशरीरिण्या वाचा यदुक्तं तत्तथैवेति निश्चिक्यतुरित्यर्थः ॥ ३८ ॥

कुर्वाते प्रत्यहं ध्यानं प्रणवब्रह्मणः शिवौ ॥
तस्माज्जपन्तु चोङ्कारं साङ्गं तु मुनिसत्तमाः ! ॥ ३९ ॥

ध्यानग्रहणं जपस्याप्युलक्षणम्, जपग्रहणमप्येवम्, यस्माद्गिरिजाशिवौ प्रत्यहं प्रणवब्रह्मणो जपं ध्यानं च कुर्वाते तस्माद्भवन्तोऽपि साङ्गमोङ्कारं जपन्तु ध्यायन्तु चेत्यर्थः ॥ ३९ ॥

तर्हि किं कुटीचकादिभिरिव परमहंसेनापि गायत्रीं जप्त्वा प्रणवो जप्यः ? नेत्याह—

त्रिकरण्या च गायत्रीं पित्रा मूढेन देशिताम् ॥
त्यक्त्वा सर्वज्ञगुरुणा दिष्टं तारञ्जपन्तु च ॥ ४० ॥

*त्रिकरण्येति* । त्रीणि करणानि वाङ्मनःकायास्तेषां समाहारः त्रिकरणी, द्विगोरिति ङीप्, तया, मूढेन अनात्मज्ञेन पुत्रविचारादिस्नेहमूढेन च पित्रा देहजनकेन देशितां साक्षादाचार्यद्वारा वा उपदेशितां गायत्रीं व्याहृत्यादिप्रदर्शनक्रमेण विधिना त्यक्त्वा सर्वज्ञेन सर्वात्मकब्रह्मविदा गुरुणा परमहंसपरिव्राजकाचार्येण दिष्टं तारं जपन्तु चकाराद्ध्यायन्तु च ॥ ४० ॥

उक्तमुक्तं दृढयितुं यतेर्गायत्रीजपे।इतरेषां तारजपे प्रणवजपे स्त्रीणां च दोषमाह—

यतिर्गायत्रीजपिता वन्ध्याश्चास्तारजापकाः ॥

मन्त्रजाप्यश्च नार्यश्च सर्वे निरयगामिनः ॥ ४१ ॥

*यतिरिति*। वटुः ब्रह्मचारी तदाद्यास्त्रयः आश्रमिणः तारजापकाः केवलप्रणवजपपराः । प्रणवघटितमन्त्रान्तरजपे तु तेषां न दोषः। मन्त्रं जपन्तीति मन्त्रजाप्यः, कर्मण्यण् । 'टिड्ढाणञ्' इत्यादिना ङीप्। सर्वे इति पुमान् स्त्रियेति पुंशेषः। आद्यश्चकारो निरयगामिषु स्त्रीणां समुच्चयार्थः। द्वितीयस्तु मन्त्रजपे अनुक्तशूद्रपतिताद्यनधिकार्यन्तरसमुच्चयार्थः ॥ ४१ ॥

इत्यवोचमहं गीतां दिव्यां प्रणवनामिनीम् ॥

यो गायति सदा शुद्धः सोऽन्ते मुक्तिं च विन्दति ॥ ४२ ॥

प्रणवेतिनामिनी नामवतीं प्रणवगीताख्यामिति यावत् । इतीति व्यवहितोपसंहारस्तत्पठनफलकीर्तनार्थः ॥ शुद्धः-स्नानाचमनादिप्रयतः। अन्ते मुक्तिं, चकारादिह वाञ्छितार्थांश्च विन्दति ॥ ४२ ॥

पठन्तु शृण्वन्तु च वाचयन्तु लिखन्तु गायन्तु च बोधयन्तु ॥

ॐकारकल्पं यतिवृन्दसेव्यं सूतोक्तमीशोक्तमनिन्दितं च ॥ ४३ ॥

इति श्रीप्रणवकल्पे चतुर्थोऽध्यायः ॥ ४ ॥

*पठन्त्विति* । प्राग्व्याख्यातम् ॥ ४३ ॥

इति श्रीप्रणवकल्पप्रकाशे चतुर्थोऽध्यायः ॥ ४ ॥

प्रणवः परमं ब्रह्म प्रणवः परमः शिवः ॥

प्रणवः परमो विष्णुः प्रणवः सर्वदेवताः ॥ १ ॥

प्रणवः परमं ब्रह्मेति प्राग्व्याख्यातम् ॥ १ ॥

मुनय ऊचुः—

सूत सूत महाप्राज्ञ द्वैपायनकृपालय ! ॥

सत्यवत्याः सुतात्सर्वं ज्ञातं वैदिकलौकिकम् ॥ २ ॥

यमुनाद्वीपरूपं यदयनं स्थानं तत्र जातो द्वैपायनः, द्वैपायनस्य व्यासस्य कृपायाः आलय आधारभूतेति सर्वरहस्योपदेशशालित्वद्योतनार्थम् । तदेव स्पष्टमाह---*सत्यवत्या इति* । वैदिकं वेदरहस्यं लौकिकं लोकरहस्यं वेदातिरिक्तविद्यास्थानरहस्यं चेत्यर्थः ॥ २ ॥

अस्माकं कृपया पूर्वमोङ्कारकवचं शुभम् ॥

ॐकारहृदयं पुण्यमोङ्काराङ्गस्तुतिस्तथा ॥ ३ ॥

कवचादीनां पञ्जराद्यन्तानां समुच्चितानां त्वया उक्तानीत्युत्तरत्रान्वयः ॥ ३ ॥

ॐकारनाम्नां दिव्यानां शतमष्टोत्तरं मुने ! ॥
ॐकारपञ्जरादीनि सर्वाण्युक्तानि भो ! त्वया ॥ ४ ॥

आदिपदाद्गीतान्तसङ्ग्रहः ॥ ४ ॥

श्रुत्वैतानि मुनिश्रेष्ठैर्लब्धं कार्त्तार्थ्यमुत्तमम् ॥
वाच्यं श्राव्यं पुनः किञ्चिदस्ति नो वद तत्प्रभो ! ॥ ५ ॥

कृतः अर्थः पुरुषार्थो जन्मसाफल्यं च यैस्ते कृतार्थास्तेषां भावः कार्त्तार्थ्यं 'गुणवचनब्राह्मणादिभ्य' इति ष्यञ् । त्वया वक्तुं योग्यं वाच्यम्, अस्माभिः अवश्यं श्रोतुं योग्यं श्राव्यम्, 'ओरावश्यके' इति ण्यत्, किञ्चित्सहस्रनाम अस्ति तत् नः अस्मभ्यं वद ॥ ५ ॥

यच्छ्रुत्वा मुनिधौरेय । श्राव्यं लोके न विद्यते ॥
ॐकारनाम्नां साहस्रं भुक्तिमुक्तिफलप्रदम् ॥ ६ ॥

यत् ॐ कारनाम्नां साहस्रं श्रुत्वा प्रणवोपास्तिविषये अन्यत् श्रोतव्यं न विद्यते नावशिष्यते ॥ ६ ॥

नानारोगहरं नृणां नानाकामार्थदायकम् ॥
नानाश्रमफलाकारं नानास्तोत्रफलप्रदम् ॥ ७ ॥

नानाकर्मणामष्टाचत्वारिंशत्संस्काररूपाणां सर्वकर्मणामर्थः प्रयोजनमात्मतत्त्वज्ञानं तद्दायकम्, नानाश्रमसाध्यान्यन्यान्यपि यानि काम्यफलानि तान्यप्याकिरति वर्षतीत्याकारम् ॥ ७ ॥

अस्मभ्यं वद लोकानां हितं कर्त्तुं महामते ! ॥
सकृच्छ्रुत्वा पठित्वा वा पुनर्जन्म न विद्यते ॥ ८ ॥

अस्मन्मुखेन प्रख्यानात्सर्वेषामधिकारिलोकानां हितं कर्त्तुं, यत्सकृच्छ्रुत्वा पठित्वा वा ॥ ८ ॥

सूत उवाच—

भो भो हे मुनयः श्रेष्ठाः ! साधु पृष्टं महात्मभिः ॥
यथा शम्भुः पुरा गौर्या मेघगम्भीरया गिरा ॥ ९ ॥

पुरा गौर्या शम्भुर्यथा पृष्टस्तथा भवद्भिरपि मेघगम्भीरया गिरा सम्यक्पृष्टमित्यन्वयः ॥ ९ ॥

प्रश्नेनानेन तुलया न पृष्टं केनचित्पुरा ॥

अतो वक्ष्यामि युष्मभ्यं यतो मुक्तिर्भवेद्ध्रुवम् ॥ १० ॥

यतो यस्मान्नामसहस्रान्मुक्तिर्ध्रुवं भवेत् तद्वक्ष्यामि ॥ १० ॥

इत्युक्त्वा वक्तुमारेभे सूतः पौराणिकः प्रभुः ।

ॐ अस्य श्रीप्रणवदिव्यसहस्रनामस्तोत्रमन्त्रस्य परब्रह्मऋषिः, अनुष्टुप् छन्दः, परमात्मा देवता, अकारो बीजम्, उकारः शक्तिः, मकारः कीलकं, मोक्षार्थे जपे विनियोगः ।

अकारोकारमकारैर्न्यासं कुर्यात्करादिषु । अष्टोत्तरनामवद्ध्रुष्टव्यम् ॥

ऋषिः कल्पादौ द्रष्टा स एव चास्य सहस्रनाम्नोऽपि, एवं प्रणवदैवतैव देवता तद्विनियोगे विनियोगश्च, छन्दस्त्वष्टाक्षरपादैः श्लोकैर्नाम्नां क्रमनिबन्धादनुष्टुप् ॥

अथ ध्यानम्—

ओंकारं निगमैकवेद्यमनिशं वेदान्ततत्त्वास्पदम् ।
चोत्पत्तिस्थितिनाशहेतुममलं विश्वस्य विश्वात्मकम् ॥
विश्वत्राणपरायणं श्रुतिशतैः सम्प्रोच्यमानप्रभम्
सत्यं ज्ञानमनन्तमूर्तिममलं शुद्धात्मकं तं भजे ॥ ११ ॥

निगमानां सर्ववेदानामेकं वेद्यं 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतेः । निशा अज्ञानान्धकारस्तद्विरोधित्वादनिशम्, वेदान्ततत्त्वस्य परब्रह्मणः वाचकत्वात्प्रतीकत्वाच्च आस्पदम् । विश्वस्योत्पत्त्यादेः अकाराद्यर्थमुखेन हेतुः अभिन्ननिमित्तोपादानकारणम्, अत एव विश्वात्मकम्, विश्वस्य सर्वस्य अधिकारिजनस्य ज्ञानादिसम्पादनेन त्राणे रक्षणे परायणम्, श्रुतिशतैः सम्यक्प्रोच्यमाना व्यायमाना प्रभा तात्पर्यविषयः ब्रह्मज्योतिर्यस्य, अनन्ता अपरिच्छिन्ना मूर्त्तिस्तात्त्विकस्वरूपा यस्य । अमलमिति प्रथमं कामकर्मवासनामलवारणाय, द्वितीयं त्वविद्यामलनिरासाय विशेषणम्, कारणमलनिरासाच्छुद्धात्मकं तं प्रणवं भजे इत्यर्थः ॥ ११ ॥

एवं न्यस्य ततो ध्यात्वा नामानि प्रजपेत्सुधीः ॥
ओंकारस्तारकः सूक्ष्मः प्रणवः सर्वगोचरः ॥ १२ ॥
क्षरमेकाक्षरं क्षारं क्षितिरुत्पत्तिहेतुकः ॥
नित्यो निरत्ययो शुद्धो निर्मलात्मा निराकृतिः ॥ १३ ॥

ॐकार इत्यादीनि यानि अष्टोत्तरशतनामसु व्याख्यातानि तानि तत एव ज्ञातव्यानि, स्पष्टानि नामानि तु प्रसिद्धार्थान्येव । शिष्टानि व्याख्यायन्ते—कार्यप्रपञ्चात्मना क्षरम् , क्षारयति नाशयति मलमिति क्षारम् क्षितिर्नाशो जगतः प्रतिष्ठा वा 'क्षि निवासगत्योरि'ति प्रसिद्धेः । उत्पत्तेहेंतुरेवोत्पत्तिहेतुकः । अत्ययो नाशस्तद्रहितत्वान्निरत्ययः ॥ १२-१३ ॥

निराधारः सदानन्दः शाश्वतः परतः परः ॥
अकारात्मा मकारात्मा बिन्दुरूपी कलाधरः ॥ १४ ॥

कलाः प्रागुक्तनवांशाः चन्द्रादिकला वा तासां धरतीति धरः ॥ १४ ॥

उकारात्मा महावेद्यो महापातकनाशनः ॥
ईड्यः परतरो वेद्यो वेदवेद्यो जगद्धरः ॥ १५ ॥

ईड्यः स्तुत्यः । चक्षुराद्यगम्यत्वादवेद्यः ॥ १५ ॥

वेदकृद्वेदवेत्ता च वेदान्तार्थस्वरूपगः ॥
वेदान्तवेद्यो नतुलः कञ्जजन्मा कमाकृतिः ॥ १६ ॥

न विद्यते तुला साम्यं यस्य स नतुलः । अमानोना प्रतिषेधे इति नशब्दस्य समासोऽयं नतु नञः । कमाकृतिः सुखाकारः ॥ १६ ॥

खरूपी खगवाही च खगः खगतरः खगः ॥
खाद्यः खभूतः खगतः खगमः खगनायकः ॥ १७ ॥

खगौ हंसगरुडौ ताभ्यां वाही वाहनवान् । खगः पक्षिरूपः। खगतरः खगश्रेष्ठः सूर्यादिः। खङ्गच्छन्तीति खगो वायुः, रूढियोगाभ्यां नामभेदः। खस्याकाशस्य आद्यः कारणम् । ततः सर्गादौ स्वयमेव खभूतः । ततो वायुरूपेण खगतः । खे गच्छतीति खगमः । खे गच्छतां सूर्यचन्द्रनक्षत्रादीनां नायकः प्रवर्त्तकः ॥ १७ ॥

खरमः खजलः खालः खगवाहः खगेश्वरः ॥
गन्ता गमयिता गम्यो गच्छन्गतिकरो गतिः ॥ १८ ॥

देवादिरूपेण खे रमत इति खरमः । खे मन्दाकिनीमेघादिरूपेण जलं यस्य स खजलः । सप्तमीविशेषणे बहुव्रीहाविति पूर्वनिपातविधिसामर्थ्याद्व्यधिकरणपदो बहुव्रीहिः । खं चन्द्रनक्षत्रादिरूपेण अलति भूषयतीति खालः । कर्मण्यण् । खगान्मेघान्वहतीति खगवाहः। खगेश्वरो गरुडरूपः । गंत्र्यादिरूपेण गन्ता। सारथ्यादिरूपेण गमयिता। ग्रामनगरादिरूपेण गम्यः । पदात्यादिरूपेण गच्छन् । अश्वादिरूपेण गतेः करो गतिकरः। गतिर्गमनक्रियारूपः ॥ १८ ॥

मनसो गतिहन्ता च गम्यानामुत्तमोत्तमः ॥
घण्टानिनादो घण्टेयो घण्टेयपरनन्दनः ॥ १९ ॥

विभूतिमत्त्वान्मनसोऽपि गतिं हन्ति तिरस्करोतीति मनसो गतिहन्ता, 'अनेजदेको मनसो जवीय' इति श्रुतेः । गम्यानां प्राप्याणां कर्मोपास्तिज्ञानफलानामुत्तमोत्तमो निरतिशयोत्कर्षकाष्ठां प्राप्त इत्यर्थः, 'आत्मलाभान्न परं विद्यत' इत्यापस्तम्बवचनात्,

अपि भूपरमाणुभूरिसङ्ख्येष्वपयातेषु चतुर्मुखेष्वलब्धात् ।
अपदुःखनिरन्तसौख्यसिन्धोर्न च लाभोऽस्ति परो निजात्मलाभात् ॥

इत्यभियुक्तोक्तेश्च । घण्टादिनादः प्रसिद्धः । घण्टेयो घण्टानादसदृशोऽनाहत इत्यर्थः । नादलाक्षणिकाद्घण्टाशब्दादुपमेये ढश्छान्दसः । घण्टेयपरान् अनाहतनादसमाधिनिष्ठान्नन्दयत्यानन्दयतीति घण्टेयपरनन्दनः ॥ १९ ॥

घण्टानादकरो घण्टानादवान्नादवान् घुणः ॥
घस्रो घनितचिद्रूपो घनानां जलदायकः ॥ २० ॥

पूजकादिरूपेण घण्टानादकरः, घण्टारूपेण प्रणवो घण्टानादवान्, घण्टादिरूपेण सर्वनादवान्, कालरूपेण सर्वं घुण इव जरयतीति घुणः । दिनरूपत्वात्सदा प्रकाशत्वाद्वा घस्रः । घनिता सैन्धवशिलोदरघना चिदेव रूपं यस्य 'तद्यथा सैन्धवघन' इत्यादिश्रुतेः ॥ २० ॥

चम्पापूज्यश्चिदानन्दश्चिराच्चिरतरश्चितिः ॥
चितिदश्चितिगन्ता च चर्मवान् चलनाकृतिः ॥ २१ ॥

चम्पाशब्दः पुष्पपरः, नित्यत्वादनादित्वाच्चिराच्चिरतरः, चीयतेऽस्मिञ्जगदितिः चितिः, चितिरूपचमसं ददातीति चितिदः । चितिरूपतयाऽस्य गन्ता प्राप्ता । शिवरूपत्वाद्व्याघ्रेभचर्मवान् ॥ २१ ॥

चञ्चलश्चालकश्चाल्यश्छायावान् छादनात्मकः ॥
छाया छाया प्रतिछाया जङ्गपूको महामतिः ॥ २२ ॥

छाया कान्तिः, छाया प्रसिद्धा, प्रतिछाया प्रतिबिम्बः । अर्थभेदाच्चाप्यभेदः । ॥ २२ ॥

जलगाह्यो जलाकारो जाली जालविनायकः ॥
झटितिप्रतिधौरेयो झञ्झामारुतसंवितः ॥ २३ ॥

जालस्य त्रिगुणमायाजालस्य विनायको नियन्ता, झटिति शीघ्रेण

प्रतिहताः सर्वे धौरेयाः भारवाहाः येन, देवाद्यगम्यगतिप्रापकत्वादिति भावः । झञ्झामारुतेन प्रलयमारुतेन सेवितः ॥ २३ ॥

टङ्कश्च टङ्ककर्त्ता च टङ्ककार्यवशानुगः ॥
ठिट्ठलो निष्ठुरः कुष्ठमठः पृष्ठगोचरः ॥ २४ ॥

टंकः पाषाणदारणः, टङ्ककार्याणि शिलादिप्रतिमास्तत्र सन्निधानात्तद्वशानुगः, ठिट्ठलः शिलादिकठिणस्थूलरूपः, सर्वभूम्याधारत्वात्कमठः, अत एव स्वपृष्ठस्थभूम्यात्मना पृष्ठगोचरः ॥ २४ ॥

काठिन्यात्मा कठोरात्मा कौटः कौटीरगोचरः ।
डमरुध्वानसानन्दो डाम्भिकानां पराङ्मुखः ॥ २५ ॥

शिलादिकाठिन्यात्मा, वज्रादिरूपेण कठोरात्मा, कुट्यां भवः कौटः । अल्पा कुटी कुटीरस्तत्र भवाः कौटीराः यतयस्तेषामुपास्यत्वेन गोचरः । डमरुध्वानेन नृत्यपरत्वात्सानन्दः । डाम्भिकानां धर्मध्वजिनां फलाभावात्पराङ्मुखः ॥ २५ ॥

डम्भेतरसमाराध्यो डाम्भिकानां विडम्बनः ॥
ढक्काकलकलध्वानोऽणिमाणुतमसुन्दरः ॥ २६ ॥

डम्भेतरैरदांभिकैः सम्यगाराध्यः; डांभिकानां तु लोकवञ्चनफलमात्रेण विडम्बनः वञ्चक इति यावत् । ढक्का यशःपटहः तेन सर्वदिक्षु प्रसिद्धः कलकलध्वानः कोलाहलध्वनिर्यस्य । अणिमासिद्धिरूपः अणिमा परमसौक्ष्म्येण अणु, तेभ्यः सूक्ष्मतमेभ्योऽप्याकाशपरमाण्वादिभ्यः सुन्दरः परमसूक्ष्म इति यावत् ॥ २६ ॥

तारतम्यफलं तल्पं तल्पशायी वितारकम् ॥
तर्त्तव्यं तरणं तारं तारकानाथभूषणः ॥ २७ ॥

फलस्य कर्मोपासनतारतम्यानुसारित्वात्तारतम्यफलम् । प्रलयादिकालरूपेण सर्वप्राणिसुखनिद्राविश्रान्तिहेतुत्वात्तल्पम् ,शेषतल्पशयनशीलत्वात्तल्पशायी संसारार्णवतारणहेतुत्वाद्विशिष्टं तारकं वितारकम् । सर्वकर्मोपास्तिफलवितरणाद्वा वितारकम् , तर्त्तव्यं संसारोत्तरणात्प्राप्यम् । तरणं तत्साधनम् । तारयतीति तारम् । तारकानाथश्चन्द्रस्तद्भूषणः शिवः ॥ २७ ॥

हिरण्यबाहुः सेनानीर्दिशानां च दिशां पतिः ॥
पीतवर्णो महावृक्षो हरिकेशोपवीतवान् ॥ २८ ॥

अत्र हिरण्यबाहुरित्यादिग्रहणं श्रीरुद्राध्यायस्थार्पनामोपलक्षणम् , तेन सहस्त्रनामसंख्यासम्पूर्त्तिरनुक्तैरपि तैः कर्त्तव्या, तदर्थश्च तद्भाष्या-देवावगन्तव्यः। तेषु केषाञ्चिदनुवाद उदाहरणार्थः। 'दिशां च पतये नमः' इति श्रुतौ चकारो देशानां पतये इति नामान्तरसमुच्चयार्थ इति दर्शयति *देशानामिति*। स्वर्गादिरूपेण पीतवर्णः॥ २८॥

स्तायूनामग्रणीः श्रीमान्निचेरुः परिचारकः॥
विल्मी च कवची वर्मी मत्तेभगवरूथवान्॥ २९॥

स्तायूनां चोराणां, विल्मं विलवल्लोहमुद्रिकारचितशिरस्त्राणं तद्वान्। मत्तैरिभैर्गच्छन्तीति मत्तेभगा गजारोहास्तत्प्रधानो वरूथो रथगुप्तिः सेनेति यावत् तद्वान्॥ २९॥

वञ्चकः परिवञ्ची च कर्मारः कुम्भकारकः॥
पक्षिपुञ्जोपजीवी च मृगयुः शुनको नयः॥ ३०॥

नयति नियच्छतीति जगदिति नयः। भक्तानां पापैरनुपघाताय महा-वज्रकवच इति वा॥ ३०॥

भक्तपापमहाद्राविर्दरिद्रो नीललोहितः॥
मीढ्वान्मीढुष्टमः शत्रुव्याधी च वभ्लुशः॥ ३१॥

भक्तानां पापानां महाद्रावीर्निःशेषेण विद्रावकः, मीढ्वान् मे-घादिरूपेण जगत्सेचकः, स एव प्रकृष्टो मीढुष्टमः। शत्रुं विध्यति तच्छीलः शत्रुव्याधी, वभ्लुर्वृषस्तस्मिञ्छेते वभ्लुशः॥ ३१॥

तोकादिरक्षकः कर्त्ता खल्य ऊर्वर्य एव च॥
श्लाघ्यनाथः सूद्यश्च हेतिसाहस्त्रसंयुतः॥ ३२॥

तोकान्यपत्यानि तदादीनां रक्षकः, खले पलालधान्यविशोधनस्थाने भवः खल्यः, उर्वरा सर्वसस्याढ्या भूमिस्तस्यां भव ऊर्वर्यः, अन्नं पर्याप्तं कर्मफलमत्तीत्यलादो जीवस्तत्रान्तर्यामितया भवतीत्यलाद्यः, स चासौ नाथश्च, सूद्यः शोभनोदकदेशभवः, हेतय आयुधानि तत्साहस्त्रसंयुतः३२

खड्गहस्तो महापद्मः शरव्यायुतमण्डनः॥
शर्वोऽपहर्तुकामश्च जरित्रस्थः प्रतारकः॥ ३३॥

खड्गहस्तः शस्त्रहस्तः, शरव्याणां इषुधीनामयुतं शतसहस्रं मण्डन-मलङ्कारो यस्य, भक्तानां पापदुःखाद्यपहर्त्तुकामः, 'तुङ्काममनसोरपी'ति मलोपः, जरित्रं जरणशीलं शरीरं तत्रस्थः, जीवरूप इत्यर्थः, प्रकर्षेण संस्मरतां तारकः प्रतारकः॥ ३३॥

अभ्रवाणो वातवाणो वर्षवाणकराम्बुजः ॥
दशप्राच्यादिवन्द्यश्च सस्पिञ्जरकलेवरः ॥ ३४ ॥

अभ्रवातवर्षैः प्राणिसंहारकत्वात्तद्बाणः,दशाङ्गुलिकरसम्पुटेन प्राच्यादिदिक्षु वन्द्यः, सस्पिर्बालतृणं तद्वत्पिञ्जरकलेवरः कोमलहरितशरीरः, पृषोदरादित्वकल्पनात्पूर्वपदे पिशब्दलोपः, अथवा ससृपयो दुर्वृत्तास्तान् जरयति क्षिणोतीति सस्पिञ्जरं तथाविधं कलेवरं यस्य ॥ ३४ ॥

जपैकशीलः सञ्जप्यः समजग्धिः सपीतकः ॥
एमादिकुशलो गौरो दिवारात्रैकवृष्टिदः ॥ ३५ ॥

समं युगपदेव सकलाऽविद्याग्रासित्वात्सर्वंजगत्संहर्तृत्वाद्वा समजग्धिः, · घसेर्यङ्लुकि क्तिनि 'घसिभसोर्हलि चे'त्युपधालोपे 'झषस्तथोर्धो' ऽध' इति धत्वे धिचेति सलोपे जग्धिरिति रूपम्, अतिथिप्रभृतिभिः समं सह जग्धिर्भोजनं यस्य गृहस्थस्य तद्रूप इति वा, एवं समानं पीतं क्षीरसोमादिपानं यस्य ससपीतकः, 'समानस्य छन्दस्य मूर्धप्रभृत्युदर्केष्वि'ति सादेशः, एतुर्भावः कर्म वा एमा सर्वत्र गमनशक्तिस्तदादिसर्वक्रियाकुशलः, एतृशब्दादिमनिचि 'तुरिष्ठेमेयस्स्वि'ति समरेः शः, तृलोपः, नीहारादिरूपेण गौरो, महामेघरूपेण कालविशेषे दिवारात्रैकवृष्टिदः ॥३५॥

पञ्चाविश्च त्र्यविश्चापि दित्यवाट् तुर्यवाट् तथा ॥
पृष्टवाट् हेहतूनाथो द्युम्नवाजादिदायकः ॥ ३६ ॥

पञ्चाविः पञ्चवत्सरो गौः, त्र्यविस्त्रिवत्सरो गौः, दित्यवाट् द्विवत्सरो वृषभः, सार्धत्रिवत्सरो वृषभस्तुर्यवाट्, चतुःसंवत्सरः पुङ्गवः पृष्ठवाट्, हेहत् गर्भपातिनी गौस्तस्या नाथः, द्युम्नं सुवर्णं वाजमन्नं तदादीनां दायकः ॥ ३६ ॥

आमीवत्को विचिन्वत्को देवानां हृदयाब्जगः ॥
आनिर्हतश्च विक्षीणो लोप्यश्चोलप्य एव च ॥ ३७ ॥

आसमन्तान्मीवति स्थूलो भवति जृम्भते व्याप्नोति वा आमीवत्को, मीव स्थौल्ये। अनुग्रहीतुं भक्तान्निग्रहीतुमभक्तांश्च विचिनोतीति विचिन्वत्कः, आसमन्ताद्दुष्टान्निहन्तीत्यानिर्हतः,विशेषेण क्षिणोति पापानीति विक्षीणः, लिप्यते तृणादिकं यस्मिंस्तल्लोपं कठिनोषरादिस्थलं तत्र भवो लोप्यः, उलपा बल्वजा नवतृणानि वा तेषु भव उलप्यः ॥ ३७ ॥

गुर्माणः पर्णशद्यो सूर्म्य ऊर्व्यो मयस्तमः ॥
शिवः शिवतमः शास्ता घोराघोरतनुद्वयः ॥ ३८ ॥

गुरुमाणः अभक्तेषु क्रोधादुद्यतायुधः, पर्णशद्यः शुष्कपर्णचयास्तेषु भवः पर्णशद्यः, सूर्म्यः प्रतिमा शोभना ऊर्मयो यासु ना नद्यो वा तत्र भवः सूर्म्यः, उर्व्यां भव ऊर्व्यः, मयस्तमः सुखतमो निरतिशयानन्दरूप इति यावत्,

समेधयति यं नित्यं सर्वार्थान्सर्वजन्तुषु ।
शिवमिच्छन्मनुष्याणां तस्माद्देवः शिवः स्मृतः ॥
अथवानन्तकल्याणगुणैकनिधिरीश्वरः ।
शिव इत्युच्यते सद्भिः शिवः शब्दार्थपारगैः ॥

नित्यकल्याणनिरतिशयानन्दरूपत्वाच्छिवतमः, शास्ता सर्वप्रशासिता 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, भीषास्माद्वातः पवत' इत्यादिश्रुतेः, प्राणिनां पापफलप्रदा घोरा तनुः पुण्यफलप्रदा त्वघोरा शिवा तनुस्तदुभयवान् ॥ ३८ ॥

गिरिपर्वतनाथश्च शिपिविष्टः पतिः पशोः ॥ ३९ ॥

शिपयो रश्मयस्तैर्विष्टो वेष्टितः सूर्यात्मा शिपिविष्टः, पश्यतीति पशुर्व्यष्टिसमष्टिर्जीवस्तस्य पतिः ॥ ३९ ॥

अप्रगल्भः प्रगल्भश्च मल्लानां नायकोत्तमः ॥
प्रहितप्रमृशो दूतः क्षत्ता स्यन्दनमध्यगः ॥ ४० ॥

प्रकर्षेण सर्वप्राणिनां हितः कार्यार्थं प्रेषितः पुरुषो वा, प्रमृशः भक्तपरामर्शकुशलः, दूतो वार्ताहरो देवानामग्निः 'अग्निं दूतं वृणीमहे' इति मन्त्रवर्णात्, क्षत्ता सारथिः ॥ ४० ॥

स्थपतिः ककुभश्चैव वन्यः कक्ष्यः पतञ्जलिः ॥
सूतो हंसो निहन्ता च कपर्दी च पिनाकवान् ॥ ४१ ॥

स्थपतिः खेटग्रामाद्यधिपतिः, ककुभः श्रेष्ठः दिशो वा, वनेषु भवो वन्यः, कक्षेषु तृणस्तम्बेषु भवः कक्ष्यः, पतन्ति अञ्जलयो यस्मिन्सर्वजनानां नमस्कार्यत्वादिति पतञ्जलिः, सूतः सारथिः, पारदो वा, हंसः परमात्मा 'हिरण्मयः पुरुष एकहंस' इति इति श्रुतेः ॥ ४१ ॥

आयुधः स्वायुधश्चैव कृत्तिवासा जितेन्द्रियः ॥
यातुधानी निहन्ता च कैलासे दक्षिणे स्थितः ॥ ४२ ॥

यातुधाना राक्षसा अस्य जगत्संहाराय सन्तीति यातुधानी, दक्षिणे कैलासे कालहस्त्यादिस्थाने ॥ ४२ ॥

सुवर्णमुखीतीरस्थो वृद्धाचलनितम्बगः ॥

मणिमुक्तामयोद्भासी काव्योऽकाट्यो महाद्रिधृक् ॥ ४३ ॥

सुवर्णमुखी सुवर्णमुखरीसंज्ञा नदी तस्यास्तीरे कालहस्तीश्वर-रूपेण स्थितः, मणिमुक्तामयैः हारादिभिश्चोद्भासी, मणिमुक्ताख्यनदी-तीरवासित्वाद्वा तन्मयः सन् उद्भासी, काटेषु शिवलिङ्गेषु भवः काव्यः, अलिङ्गत्वादकाट्यः, मेरुकोदण्डधारित्वान्महाद्रिधृक् ॥ ४३ ॥

ह्रद्य्यश्च निवेष्प्यश्च हरित्यः शुष्क्य एव च ।
सिकत्यश्च प्रवाह्यश्च भवरुद्रादिनामवान् ॥ ४४ ॥

ह्रदेषु भवो ह्रद्य्यः, निवेष्प्यं हि मोदकं तत्र भवो निवेष्प्यः, हरितेषु नवतृणशैवालादिषु भवो हरित्यः, शुष्केषु समित्करीषादिषु भवः शुष्क्यः, सिकतासु भवः सिकत्यः, प्रवाहेषु प्रवहज्जलेषु भवः प्रवाह्यः, रुद्राध्यायस्थभवरुद्रादिसर्वनामवान्, अतएवोक्तमस्माभिः सहस्रनामसु न्यूना संख्या रुद्राध्यायस्थितनामभिः पूरणीयेति ॥ ४४ ॥

भीमोऽभीमोऽपरिक्रान्तो विक्रान्तः सपराक्रमः ।
शूरशूर निहन्ता च मन्युमान्मन्युनाशनः ॥ ४५ ॥

अभक्तानां भयानकत्वाद्भीमः, भक्तानां तु सौम्यतमत्वादभीमः, विभुत्वात्परिच्छेदाप्रसिद्धेः केनापि न परितः क्रान्तोऽपरिक्रान्तः अप्राप्तपार इति यावत्, स्वयं तु सर्वत्र विक्रान्तः सर्ववस्तुपारग इत्यर्थः, सर्वेभ्यो बलवत्तमत्वात्सर्वसंहर्तृत्वाच्च सपराक्रमः ॥ ४५ ॥

भामितो भामवान्भाम उक्षा नोक्षितरक्षकः ।
हविष्मान्मघवांश्चैव मखानां फलदायकः ॥ ४६ ॥

अशास्त्रमार्गप्रवृत्तेषु सदा भामितः क्रुद्धः, यतो भामवान् प्रशासनार्थं क्रोधवान्, भामः क्रोधस्वरूपः, उक्षा धर्मवृषस्वरूपः, उक्षितानां मातृकुक्षिनिषक्तगर्भाणां मेघसिक्तसस्यादीनां च रक्षकः, यजमानमूर्त्या देवेभ्यो हविःप्रदातृत्वात् हविष्मान्, हविरिज्येन्द्रादिरूपत्वान्मघवान् पूजावान्, मखानां यज्ञानां फलदायकः ॥ ४६ ॥

अघघ्नो दोषजालघ्नो व्याध्यामयविनाशनः ।
सुम्नरूपोऽसुम्नरूपो जगन्नाथोऽधिवाचकः(२) ॥४७॥

भक्तानामघानि पापानि हन्तीत्यघघ्नः, दुर्व्यसनकुलक्षणादिदोषजालं हन्तीति दोषजालघ्नः, विध्यन्तीति व्याधयः सद्यः प्राप्तरोगाः, आमया दीर्घरोगास्तेषां निवारकः, सुम्नं धनं तद्रूपोऽभक्तानां तु असुम्नं दारि-

दूरयं तद्रूपः, अभक्तानां स्वभक्तानां च विवादे स्वभक्तानधिकान्यक्ति भक्तपक्षपातित्वादित्यधिवाचकः ॥ ४७ ॥

व्रातश्च व्रातनाथश्च व्रात्यो व्रात्यादिदूरगः ॥
ब्रह्मदत्तश्चेकितानो देवदत्तोऽतिसम्मतः ॥ ४८ ॥

नानाजातीयजनानां समूहो व्रातस्तद्रूपः, तस्य नाथः स्वामी च, असङ्गनिर्विकारचिद्रूपत्वेन अनाधेयसंस्कारत्वाद्व्रात्यः, गर्भाधानादिसंस्काररहीना व्रात्याः, आदिपदेन श्रौतस्मार्तविपरीततत्प्रमुद्रादिसंस्कृताश्च जना गृह्यन्ते तेषां दूरगः, ब्रह्मणा हिरण्यगर्भेण मुनिभ्यो दत्तो ब्रह्मदत्तः, उपासनया प्राणात्मभूतत्वेन श्रुतिप्रसिद्धो मुनिर्वा चेकितानः, सर्वाधिष्ठानत्वाज्जगन्निवासभूतः, भवरोगचिकित्सको वा, 'चेक्तिज निवासे रोगापनये चे'ति धातोर्यङ्लुगन्तादधिकरणे कर्तरि वा 'अन्येभ्योपि दृश्यत' इति चानश्, सर्वदिष्टानामतिशयेनोपास्यतया सम्मतः ॥ ४८ ॥

श्रमणोऽश्रमणः पुण्य आश्रमाणां फलप्रदः ॥
कालः कालयिता कालः कालकालो कलाधरः ॥ ४९ ॥

श्रमणस्तपोध्यानजपादिश्रमपरपरिव्राजकः, अश्रमणस्तद्व्यतिरिक्तगृहस्थाद्याश्रमत्रयस्वरूपः,कालः कृष्णवर्णः,कालयिता षड्भावविकारैः सर्वजगतः परिणामयिता, कालः संवत्सरादिरूपः, कालकालो मृत्युसंहर्ता, कलाधरश्चन्द्रः ॥ ४९ ॥

धनुष्मान्निपुणांश्चैव धन्वा विश्वाततावनः ॥
सत्यादिनिरयाधारः काकुरः काकुवाग्बलः ॥ ५० ॥

धन्वा मरुदेशः धनुर्वा, विश्वस्य अततैर्विस्तीर्णैरायुधैः अवनो रक्षकः, सत्यादीनां निरयान्तानां लोकानां सत्यादिधर्माश्रयपुरुषाणां च आधार आश्रयः, काकुः शोकभीत्यादिप्रयुक्तध्वनिविकारः सोऽस्यास्तीति काकुरः, काकुवाचां कलभाषिणां बालमुग्धादीनामपि पालकत्वाद्बलभूतः ॥ ५० ॥

राका कालविधाता च विश्वरक्षैकदक्षिणः ॥
अग्रेवधो दूरवध्यः शन्तमश्च मयस्करः ॥ ५१ ॥

राका पूर्णिमा, सूर्यचन्द्रादिरूपेण तिथ्यादिरूपस्य कालस्य विधाता, अग्रे स्थितया स्वभक्तजिघांसून् हन्तीत्यग्रेवधः, दूरेऽपि स्थिता भक्तजिघांसवो वध्या यस्य स दूरवध्यः, शन्तमः सुखतमो निरतिशयानन्दरूपः, अत एव भक्तानां मयस्करः विचित्रसुखकरः ॥ ५१ ॥

कालभारः कालकर्ता ऋचां भावैकवेदनः ॥
यजुषां सर्वमध्यस्थः साम्नां सारैकगोचरः ॥ ५२ ॥

कालं बिभर्ति धारयति पोषयतीति वा कालभारः, ऋचां ऋगुपलक्षितसर्ववेदानां भावं तात्पर्यार्थमेक एव वेदयतीति भावैकवेदनः, एवं यजुर्वेदादिरूपाणां सर्वेषां वेदानां मध्यस्थो मध्ये विराजमानः, 'यश्छन्दसामृषभो विश्वरूप' इत्यादिश्रुतेः, साम्नां सार उद्गीथस्तदेकगोचरस्तत्र प्रधान इत्यर्थः, 'साम्नां उद्गीथो रस' इति श्रुतेः ॥ ५२ ॥

अङ्गिराश्च तथा पूर्ववेद्यो ब्राह्मणमध्यगः ॥
मुक्तानां च गतिः पुण्यः पुण्यापुण्यहरो हरः ॥ ५३ ॥

अङ्गिराः अङ्गानां रसभूतः प्राणः, पूर्वैराचार्यैरावेद्यः शिष्येभ्य उपदेश्यः, ब्राह्मणानां वर्णोत्तमानां वेदभागानां च मध्यगः हृत्संस्थः, पुण्यो धर्मरूपः ॥ ५३ ॥

उक्थमुक्थकरश्चोक्थी ब्रह्मक्षत्रविडन्तिमः ॥
धर्मोऽधर्महरो धर्म्यो धर्मी धर्मपरायणः ॥ ५४ ॥

उक्थं शस्त्रविशेषः, प्राणरूपेण उक्थं करोत्युच्चारयतीत्युक्थकरः, उक्थरूपशस्त्रवानुक्थी, ब्रह्म ब्राह्मणजातिः, एवं क्षत्रविट्, अन्तिमः शूद्रः, अधर्मस्य हरो निवारणः, धर्मी नियतधर्मः ॥ ५४ ॥

नित्योऽनित्योऽक्षरः क्षान्तो वेगवानमिताशनः ॥
पुण्यवान् पुण्यकृत्पूतः पुरुहूतः पुरुष्टुतः ॥ ५५ ॥

अक्षरः अपक्षयरहितः, क्षान्तः क्षान्तवान्, वाय्वादिरूपेण वेगवान्, सर्वसंहर्तृत्वादमिताशनः, पुरुभिर्बहुभिर्जनैः स्तोत्रशस्त्रमन्त्रैश्च स्तुतः पुरुष्टुतः, 'स्तुतस्तोमयोश्छन्दसी'ति षत्वम् ॥ ५५ ॥

अर्चिष्मानर्चितः कुम्भः कीर्तिमान्कीर्तिदोऽकलः ॥
स्वाहाकारो वषट्कारो हन्तकारः स्वधाभिदः ॥ ५६ ॥

न विद्यन्ते कलाः अवयवा यस्य स अकलः, स्वाहा, वषट्कारो देवयज्ञेषु, हन्तकारो मनुष्ययज्ञे, स्वधाभिधः पितृयज्ञेषु ॥ ५६ ॥

भूतकृद्भूतभृद्भर्ता द्विवर्हा द्वन्द्वनाशनः ॥
मुनिः पिता विराड् वीरो ब्रह्मा देवो दिनेश्वरः ॥ ५७ ॥

द्वे ऐहिकामुष्मिकसुखे वृंहयति वर्द्धयतीति द्विवर्हा, शीतोष्णादिद्वन्द्वस्य नाशनः, मननशीलो मुनिः, पातीति पिता, सर्वस्थूलप्रपञ्चसमष्टिरूपेण च विराजत इति विराट् ॥ ५७ ॥

तारका तारकं तूर्णं तिग्मरश्मिस्त्रिनेत्रवान् ॥
तुल्यं तुल्यहरोऽतुल्यं त्रिलोकीनायकस्त्रुटिः ॥ ५८ ॥

तारका नक्षत्ररूपः, तारणात्तारकं प्रणवः, तूर्णमविलम्बितम्, तिग्मास्तीक्ष्णा रश्मयो यस्य स तिग्मरश्मिः, तुलया सम्मितं तुल्यम्, नौवयोधर्मेति यत्, असदृशत्वात्स्वतुल्यं हरति निराकरोतीति तुल्यहरः, न विद्यते तुल्यं यस्य, त्रुटिः सूक्ष्मकालः ॥ ५८ ॥

तर्त्ता तार्यं त्रिभुवनी तीर्णं तीरं च तीरणीः ॥
सतीरस्तीरगस्तीव्रं तीक्ष्णरूपी च तीव्रिमा ॥ ५९ ॥

तर्त्ता तरणोद्युक्तजनः, इडभावश्छान्दसः, त्रयाणां भुवनानां समाहारः त्रिभुवनी, पात्रादेर्नेति गणकार्यस्यानित्यत्वाद्द्विगोरिति ङीप्, तीरं नयतीति तीरणीः, तीव्रं त्वरितम्, तीव्रिमा त्वरावत्ता ॥ ५९ ॥

अर्थोऽनर्थः समर्थश्च तीर्थरूपी च तीर्थकः ॥
दायादो देयदाता च दायदः परिपूजितः ॥ ६० ॥

अर्थः पुरुषप्रवृत्तिप्रयोजनम्, दायः पित्रादिधनमत्तीति दायादः पुत्रादिः, दायं ददातीति दायदः ॥ ६० ॥

दायभुक् दायहन्ता च दामोदरगुणाम्बुधिः ॥
धनं धनदविश्रान्तो धनदो धननायकः ॥ ६१ ॥

सतां दायं भुनक्ति पालयतीति दायभुक्, असतां तु दायहन्ता, दामरज्जुस्तया मात्रा उलूखले बद्धमुदरं यस्य स दामोदरः, विभक्तिलोपश्छान्दसः, गुणानामम्बुधिः समुद्रः, धनं प्रसिद्धम्, यतीनां निष्किञ्चनानां पुरुषार्थहेतुत्वाद्ध्येयत्वाद्धानं वा, धनदे कुबेरे पद्मशङ्खादिनिधिरूपेण विश्रान्तः ॥ ६१ ॥

निष्ठुरो नारशायी च नेता नायक उत्तमः ॥
नैको नैकचरो नाव्यो नारायणसमः प्रभुः ॥ ६२ ॥

नराणां समूहो नारं तेषु तत्राविद्यावृतात्मरूपेण शेत इति नारशायी, नेता स्वामी मार्गदर्शको वा, नायकः स्वामी, नैको नामरूपभेदेन बहुविधः, बहुभिर्भृत्यैः सह चरतीति नैकचरः, ना एकचर इति नामद्वयं वा, नावा तार्यो नाव्यः, नारायण इव जगदुद्धारकत्वात्प्रणवो नारायणसमः ॥ ६२ ॥

नूपुरं नूपुरी नेयं नरनारायणोत्तमौ ॥
पातालं पायिता पेयं पिबन्सागरपूर्णिमा ॥ ६३ ॥

नूपुरं मञ्जीराभरणरूपः, तद्भूषितो नुपुरी, नेयं प्रापणीयं परमपदं, नारायणनरौ बदर्याश्रमे प्रसिद्धौ तावेवोत्तमौ तद्रूपाविति यावत्, सुरान्नमृतपायिता, तृच इडभावश्छान्दसः, पेयममृतादि, देवादिरूपेणामृतादि पिबन्, सागराणां पूर्णेन्दुरूपेण वर्द्धनत्वात्पूर्णिमा पूर्णता वा ॥ ६३ ॥

पूर्यं पूर्णं पूर्णिमा च पुण्यमानसलालितः ॥
पेपीयमानः पापघ्नः पञ्चयज्ञमयः पुरुः ॥ ६४ ॥

जगदादित्वात्पूर्यम्, अपरिच्छेदत्वात्पूर्णं, पूर्णिमा राका, पुण्यैर्यतिभिर्मानसे लालितः पूजितः, कृष्णपक्षे देवैः पेपीयमानश्चन्द्ररूपः, पुरुर्बहुः ॥ ६४ ॥

परमात्मा परेशानः पावनात्मा परात्परः ॥
पञ्चबुद्धिमयः पञ्चप्रयाजादिमयः परः ॥ ६५ ॥

पञ्चज्ञानेन्द्रियजन्या बुद्धयस्तन्मयः, इडादिस्वाहाकारान्ताः पञ्च प्रयाजाः, आदिपदात्तत्प्रधाना यज्ञास्तन्मयः ॥ ६५ ॥

प्राणभृत्प्राणहा प्राणः प्राणहृत्प्राणचेष्टितः ॥
पञ्चभूतमयः पञ्चकरणाश्वोपबृंहितः ॥ ६६ ॥

प्राणान्बिभर्त्तीति प्राणभृत्, प्राणान्हन्तीति प्राणहा, प्राणान्हरतीति प्राणहृत्, प्राणो मुख्यप्राणः समष्टिसूत्रात्मा तच्चेष्टितमिव चेष्टितं यस्य, उष्ट्रमुखादिवत्समासः, पञ्चभिश्चक्षुरादिकरणाश्वैरुपबृंहितः बहिर्विषये प्रवर्त्तितः ॥ ६६ ॥

प्रेयान्प्रेमतमः प्रेयः प्रेयसी प्रेयसीरतः ॥
पुरुषार्थः पुण्यशीलः पुरुषः पुरुषोत्तमः ॥ ६७ ॥

प्रेयान्प्रेयतरः, 'तदेतत्प्रेयः पुत्रादि'त्यादिश्रुतेः, प्रेमतमो निरतिशयप्रेमा, प्रेयः प्रेयतरं भोग्यजातम्, प्रेयसी भार्यादिः, प्रेयसीषु रत आसक्तः, धर्मादिचतुर्विधपुरुषार्थः ॥ ६७ ॥

फलं फलस्य दाता च फलानामुत्तमोत्तमः ॥
बिम्बं बिम्बात्मकं बिम्बी बिम्बिनी मानसोल्लसः ॥ ६८ ॥

सर्वकर्मणां फलं तद्रूपः, फलानां मानुषानन्दादीनामुत्तमं हैरण्यगर्भं सुखं तस्मादप्युत्तमो निरतिशयानन्दरूपः, बिम्बं सूर्यचन्द्रादेः, तद्बिम्बात्मकं ज्योतिः, बिम्बी तद्बिम्बाधिष्ठाता पुरुषः, तद्बिम्बिनी तद्भासिका चित्, तदैव सर्वमानसेषु साक्षिप्रतिबिम्बादिभावेनोल्लसतीति मानसोल्लासः ॥ ६८ ॥

बधिरोऽबधिरो बालो बाल्यावस्थो बलप्रियः ॥
एकोऽद्वयी दशबलः पञ्चकी चाष्टकी पुमान् ॥ ६९ ॥

श्रोत्रादीन्द्रियाभावाद्बधिरस्तथापि सर्वशब्दग्राहित्वादबधिरः, 'पश्यत्यचक्षुः स शृणोत्यकर्ण' इति श्रुतेः, 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितमि'ति स्मृतेश्च, एवं देहधर्मबाल्यारोपाद्बालः, देहधर्मबाल्याद्यवस्थारोपाधिष्ठानत्वात् बाल्यावस्थायुक्तः, बलो हलायुधः प्रियो यस्य स बलप्रियः, सर्वशरीरेष्वेक आत्मा, अत एव द्वितीयस्य मिथ्यात्वादद्वयी, समष्टिव्यष्टिभेदेन द्विपञ्चसंख्यः प्राणो बलं यस्य स दशबलः, पञ्चभूतैः पञ्चकी, अष्टमूर्त्तिभिः पुर्यष्टकेन चाष्टकी ॥ ६९ ॥

भगश्च भगवान्भल्गुर्भाग्यं भल्लश्च मण्डितः ॥
भवांश्च भावदायादो भवो भूरादिदैवतम् ॥ ७० ॥

भग ऐश्वर्यादिः—

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणात् ॥

सोऽस्यास्तीति भगवान्, भल्गुः संवरीता संवरिता च, 'भल भल्लसंवरणे चे'ति धात्वर्थयोगात, भाग्यं संपत् सुकृतं वा, भल्लः शरविशेषः, मण्डितः सुखितः, भातीति भवान्, भातेर्डवतुः, भावो रसस्तस्य दायादो भ्राता, ब्रह्मणो वक्त्रात्प्रणवोत्पत्तेः, भावो तस्य सगोत्रो ब्रह्मपुच्छक इति शौनकोक्तेश्च, भवः शिवो जगच्च, भूलोकान्तायाः भूमेः पृथिव्या दैवतं उपास्यः ॥ ७० ॥

भवानी भवविद्वेषो भूतनित्यप्रचारितः ॥
भाषा भाषयिता भाष्यं भावकृद्भाष्यवित्तमः ॥ ७१ ॥

भवस्य पत्नी भवानी, पुंयोगादाख्यायां ङीषीन्द्रवरुणेत्यादिना आनुक्, भवं संसारं विशेषण द्वेष्टीति भवविद्वेषः, भूतैर्महाभूतैः प्राणिभिः प्रमथैर्वा नित्यप्रचारितो व्यवहारितः, भाषा भारती संस्कृतवाक्, अन्तर्वाक्प्रेरणेन सर्ववाग्मिनां भाषयिता 'केनेषितां वाचमिमां वदन्ती'ति श्रुतेः, भाष्यं श्रुतिसूत्रविवृतिः, भावो मानसविकारस्तं करोतीति भावकृत, 'केनेषितं पतति प्रेषितं मन' इति श्रुतेः, भाष्यमुक्तलक्षणं विदन्तीति भाष्यविदः, सर्वज्ञत्वात्तच्छ्रेष्ठः ॥ ७१ ॥

मन्दो मलिनविच्छ्रेष्ठो माली माला मरुद्वलन् ॥
मूर्त्तिमानपुनर्वेद्यो मुनिवृन्दो मुनीश्वरः ॥ ७२ ॥

मन्दः शनैश्चरः, मलिनं दुष्टं चित्तेन्द्रियादि तद्विदां श्रेष्ठः सर्वसाक्षित्वात्, सर्वखेचराणां गरुत्पक्ष इवाकाशगमनहेतुः, सकृद्विदितो विदित एव प्रथयेद्नेनैव मूलाज्ञाननाशात्पुनर्वेदनकृत्याभावाद्पुनर्वेद्यः॥७२॥

मरुर्मरुजलं मेरुर्मरुद्गणनिषेवितः ॥

मर्यादास्थापनाध्यक्षो मर्यादाप्रविभञ्जनः ॥ ७३ ॥

जगन्मृगतृष्णिकारोपस्थानत्वान्मरुः, जगद्रूपेण तु मरुजलं, मरायगाधकूपजलमिवातिप्रयत्नलभ्यत्वाद्वा सर्वोन्नत्यात्सर्वदेवाश्रयत्वाद्वा मेरुः, जगन्मर्यादास्थापने अध्यक्षः नियन्ता, 'एष सेतुर्विधरण' इत्यादिश्रुतेः, कलिकालादौ वेदमर्यादाप्रविभञ्जनः असन्मर्यादाविनाशको वा ॥ ७३॥

मान्यो मानयिताऽमान्यो मानदो मानगोचरः॥

यास्को युवा यौवनाढ्यो युवतीभिः पुरस्कृतः ॥ ७४ ॥

न विद्यते मान्यो यस्मादित्यमान्यः, अपरिच्छिन्नत्वान्न लोकत्रयेऽपि न मातीत्यमान्यः इति वा, श्रुत्यादिमानगोचरः, यस्कस्य गोत्रापत्यं यास्को निरुक्तकृत्, यौवनेन आढ्यः संपन्नः, अत एव युवतीभिः पुरस्कृतः ॥ ७४ ॥

वामनीर्भामनीश्चैव भारूपो भास्करद्युतिः ॥

संयद्वामो महावामः सिद्धिः संसिद्धिकल्पनः ॥ ७५ ॥

वामानि प्राणिभ्यः सर्वकर्मफलानि नयति प्रापयतीति वामनीः, भा॒नि सूर्यचन्द्रादितेजांसि नयत्युदयास्तमयमिति भामनीः, 'एष उ वा भामनीरिति' श्रुतेः, सम्यग्यन्ति वा मान्युक्तलक्षणानि यं स संयद्वामः, महान्ति अश्वमेधादिफलानि यस्मात्स महावामः, सिद्धिरणिमाद्यष्टसिद्धिः, सर्ववस्तूनां संसिद्धिः स्वभावः यथाऽग्नेरौष्ण्यं जलस्य द्रवशीतलेत्यादिः तां कल्पयतीति संसिद्धिकल्पनः ॥ ७५ ॥

सिद्धसङ्कल्प एणाढ्यस्त्वनूचानो महामनाः ॥

वामदेवो वसिष्ठश्च ज्येष्ठश्रेष्ठो महेश्वरः ॥ ७६ ॥

एणाढ्यो मृगाङ्कश्चन्द्रः मृगपाणिः शिवश्च, अनूचानः गुरुकुलवासनियमादिना साङ्गवेदाध्यायी, महामनाः मानोर्जितचित्तः ॥ ७६ ॥

मन्त्री च वाग्गिजो दिव्यो भुवन्तिर्वारिविस्कृतः ।

कार्यकारणसङ्घातो निदानं मूलकारणम् ॥ ७७ ॥

गुप्तसम्मापणीयत्वान्मन्त्रः पञ्चाक्षरादिःसोऽस्यास्तीति मन्त्री, वाणिजो वणिग्धनवर्द्धनस्तद्रूपः, भुवं महीन्तनोति विस्तारयतीति भुवन्तिः, वरिवो धनं तत् करोतीति वरिवस्कृतः स एव वारिवस्कृतः, वरिवो सेवा तत्कृत्सुवत्सलो वा, कार्यकारणसंघातो देहादिः ॥ ७७ ॥

अधिष्ठानं विश्रमाढ्योऽविवर्त्तो ब्रह्म केवलम् ।।
अणिमा महिमा वेत्ता प्रथिमा पृथुलं पृथुः ।। ७८ ।।

जगत्कल्पनाधिष्ठानं, जन्मादिपरम्पराभ्रान्तिविश्रमेण निरतिशयानन्देन आढ्यः, अविवर्त्तः सर्वविवर्त्तबाधावधिः, अणिमाद्याः सिद्धयः, इमनिचि टिलोपः सर्वत्र, पृथोर्भावःप्रथिमा, 'ऋतोहलादेर्लघोरि'ति रादेशः ॥ ७८ ॥

जीवो जैवः प्राणधर्त्ता करुणो मैत्रिको बुधः ।।
ऋचां जलमृचां कर्त्ता ऋग्मुखो रविमण्डलः ।। ७९ ।।

ऋचां जलं समूहः वेदरूप इति यावत् ॥ ७९ ॥

रूढोऽरूढी रूढिनिष्ठो रुरुक्षू रूपवर्जितः ।।
स्वरो हलश्च हल्यश्च स्पर्शश्चोष्मा तथाऽन्तरः ।। ८० ।।

रूढः प्रसिद्धः, रूढिः प्रसिद्धिः प्रादुर्भूतिश्च, रोढुं प्रादुर्भवितुमर्हत्पद्मारोढुं वा इच्छु रुरुक्षुः, स्वरः अकारादिरुदात्तादिर्वा, हलः प्रसिद्धः, हलं वहतीति हल्यः, अथवा हलो व्यञ्जनानि तेषु भवो हल्यः, स्पर्शः कादिपञ्चवर्गरूपः, शषसह ऊष्माणः, तेजसि प्रसिद्धो स्पर्शोष्माणों वा, अन्तरोऽन्तस्था यरलवाः, सर्वभूतान्तरो वा ॥ ८० ॥

विशोकश्च विमोहश्च यः स एव जगन्मयः ।।
एकोऽनेकः परः पीड्यः शतार्द्धं च शतं बृहत् ।।८१।।

विशोको विगतशोकः, 'शोकं मोहं जरां मृत्युमत्येती'ति श्रुतेः । यतो विमोहो विगतमोहः, य उद्देश्यः स प्रतिनिर्देश्यः, एकः परमार्थतः, अनेको व्यवहारतः, परः श्रेष्ठः, पीड्यः कर्माधीनदुःखार्हो जीवः, शतार्द्धं पञ्चाशत् ॥ ८१ ॥

सहस्रार्द्धं सहस्रं च इन्द्रगोपश्च पङ्कजम् ।।
पद्मनाभः सुराध्यक्षः पद्मगर्भः प्रतापवान् ।। ८२ ।।

रागादिरञ्जितत्वादिन्द्रगोपसदृशः, 'यथेन्द्रगोपो यथा पाण्ड्वविक्रमि'ति श्रुतेः, पङ्कजं भूपद्मम् ॥ ८२ ॥

वासुदेवो जगन्मूर्त्तिः सन्धाता धातुरुत्तमः ॥
रहस्यं परमं गोप्यं गुह्यमद्भुतविस्मितम् ॥ ८३ ॥

सन्धाता कालेनासुरादिभिश्छोच्छिन्नाया जगन्मर्यादायाः पुनः सन्धानकर्ता, धातुः सारः, धातुर्हिरण्यगर्भादप्युत्तम इत्यैकपद्यं वा, अद्भुतादपि विस्मितं विस्मतविषयः अत्यद्भुतमिति यावत् ॥ ८३ ॥

आश्चर्यमतिगम्भीरं जगद्बुद्बुदसागरः ॥
संसारविषपीयूषं भवबृश्चिकमान्त्रिकः ॥ ८४ ॥

जगन्ति ब्रह्माण्डानि तल्लक्षणानां बुद्बुदानां सागरः, संसारलक्षणस्य विषस्य निवर्तकं पीयूषममृतम् ॥ ८४ ॥

भवगर्तसमुद्धर्ता भवव्याघ्रवशङ्करः ॥
भवग्रहमहामन्त्रो भवभूतविनाशनः ॥ ८५ ॥

भवो जन्मादिस्तल्लक्षणाद्गर्त्ताच्छ्वभ्रात्समुद्धर्त्ता भक्तानाम्, एवं भवव्याघ्रं वशं करोतीति वशङ्करः, बाहुलकात्कृञः खश्, भवलक्षणो ग्रहः पिशाचभेदस्तदुच्चाटने महामन्त्रः ॥ ८५ ॥

पद्ममित्रं पद्मबन्धुर्जगन्मित्रं जगद्गुरुः ॥
कविर्मनीषी परिभूर्याथातथ्यविधायकः ॥ ८६ ॥

कविः क्रान्तदर्शी, मनसा ईष्टे इच्छातो नियन्ता विश्वस्य, परिभवतीति परिभूः सर्वगतः, यथातथाभावो याथातथ्यं सर्वपदार्थानां स्वभावो नियतिस्तस्य विधायकः ॥ ८६ ॥

दूरस्थोऽप्यन्तिकस्थश्च शुभ्रो ऽकायं तथाऽव्रणम् ॥
कौषीतकीतल्वकारो नानाशाखाप्रवर्त्तकः ॥ ८७ ॥

शुभ्रः शुद्धः, अकायं स्थूलादिदेहरहितं ब्रह्मतत्त्वम्, अत एवाऽव्रणम्, कुषीतकस्यापत्यं कौषीतकिस्तेन दृष्टा वेदशाखा कौषीतकी, एवं तल्वकारस्तेन दृष्टा शाखा ॥ ८७ ॥

उद्गीथं परमौद्गात्रं शस्त्रं स्तोमं मखेश्वरः ॥
अश्वमेधः क्रतुच्छ्रायः क्रतुः क्रतुमयोऽक्रतुः ॥ ८८ ॥

उद्गीथं सामभक्तिविशेषः प्रणवघटितः, 'ॐमित्येतदक्षरमुद्गीथमुपासीतेति श्रुतेः, औद्गात्रमुद्गातुः कर्म, अप्रगीतमन्त्रैर्दैवतास्तुतिः शस्त्रं प्रस्तोतुः कर्म, स्तुतिपरमन्त्रसंघः स्तोमः, मखाः यज्ञास्तेषामीश्वरः

क्रतूच्छ्रयः क्रतुश्रेष्ठः, क्रत्वनुष्ठानकृतो यजमानस्योत्कर्षो वा, अक्रतुरसङ्कल्पः 'तमक्रतुं पश्यति वीतशोकः' इति श्रुतेः ॥ ८८ ॥

पृषदाज्यं वसन्ताज्यं ग्रीष्म इध्मः शरद्धविः ॥
ब्रह्मतातो विराट्तातो मनुतातो जगत्ततः ॥ ८९ ॥

पृषदाज्यं दधिबिन्दुमिश्रितमाज्यम्, पुरुषस्य यज्ञत्वकल्पने श्रुतौ 'वसन्तोऽस्यासीदाज्यमि'ति वसन्तर्त्तोराज्यत्वकल्पनात्, एवं ग्रीष्म इध्मः शरद्धविः, ब्रह्माऽऽदिर्हिरण्यगर्भस्तस्य तातः पिता, एवं विराजो ब्रह्माण्डशरीरस्यापि तातः, मनोस्तातो मनुतातः, जगदात्मना ततो विस्तीर्णो जगत्ततः ॥ ८९ ॥

सर्वतातः सर्वधर्त्ता जगद्बुध्नो जगन्निधिः ॥
जगद्वीचितरङ्गाणामाधारं परमं पदम् ॥ ९० ॥
जगत्कल्लोलपाथोधिर्जगदङ्कुरकन्दरः ॥
जगद्वल्लीमहाबीजं जगत्कन्दरमुद्धरः ॥ ९१ ॥

जगतो बुध्नो मूलम्, जगन्ति व्यष्टिसमष्टिस्थूलसूक्ष्मप्रपञ्चास्तल्लक्षणानां वीचीनामल्पतरङ्गाणां बृहत्तरङ्गाणां च आधारः, जगतो निलयनस्थानभूतं कन्दरो गिरिगुहा, उद्धृता धरा येन स उद्धरः ॥९० ॥ ९१ ॥

सर्वोपनिषदां कन्दं मूलकन्दं मुकुन्दकः ॥
एकाम्रनायको धीमाञ्जम्बुकेशो महातटः ॥ ९२ ॥

सर्वासामुपनिषदां रहस्यविद्यानां कन्दं मूलम्, जगन्मूलस्य अव्ययस्याप्यधिष्ठानत्वान्मूलकन्दम्, मुकुन्द एव मुकुन्दकः, एकाम्रं काञ्चीपुर्यामुत्कलेषु वा प्रसिद्धस्थानं तस्य नायकः स्वामी एकाम्रेशः भुवनेशय इति वा प्रसिद्धः, महातटः समुद्रः स्थानविशेषो वा ॥ ९२ ॥

न्यग्रोधोदुम्बरोऽश्वत्थः कूटस्थः स्थाणुरद्भुतः ॥
अतिगम्भीरमहिमा चित्रशक्तिर्विचित्रवान् ॥ ९३ ॥

कूटस्थो निर्विकारः, स्थाणुर्निष्क्रियः, अतिगम्भीरो दुरवगाहो महिमा यस्य, चित्राः शक्तयो यस्य स चित्रशक्तिः, अत एव विचित्रतत्कार्यवान् ॥ ९३ ॥

विस्मितं चित्रवैचित्र्यो मायावी माययाऽऽवृतः ।
कपिञ्जलः पिञ्जरश्च चित्रकूटो महारथः ॥ ९४ ॥

स्वेनैव स्वयं विस्मितमद्भुतरसं प्राप्तम्, चित्राणि वैचित्र्याणि यस्मात्स चित्रवैचित्र्यः, यतो मायावी मायानियन्ता, मायया आवृतोऽपि,

कपिञ्जलः पक्षिभेदः, पिञ्जरः शबलवर्णः, चित्रकूटो गिरिविशेषः, चित्राणि कूटानि मायाकापटथानि यस्येति वा, महारथः प्रसिद्धः—

महारथोऽसौ यस्त्वेकः सहस्रैः प्रतियुध्यति इति ॥ ९४ ॥

इत ऊर्ध्वं भक्त्यतिशयाच्चतुर्थ्यन्तानि क्वचित्सम्बुध्यन्तानि च नामानि नमस्कारसहितान्याह—

जगन्मयाय दिव्याय देवाय परमात्मने ॥
जगन्मायाय जगते प्रतीचे ते नमो नमः ॥ ९५ ॥

*जगन्मयायेति* । जगत्प्रचुरायेत्यर्थः । दिवि द्योतनात्मके स्वरूपे स्वर्गे च भवो दिव्यः, दीव्यति सर्गादिभिः क्रीडतीति देवः, परमाय उत्कृष्टाय आत्मने, देहप्राणमनइन्द्रियबुद्ध्याद्युपहिताः आत्मानः प्रसिद्धास्तेभ्यो निष्कृष्टः परम आत्मा, जगदेव माया यस्य स जगन्मायः तस्मै, जगते जगद्रूपाय, प्रतिवस्त्वधिष्ठानभावेनाञ्चतीति प्रत्यक् तस्मै प्रतीचे, प्रति उपपदे अञ्चेः क्विनि नलोपे ङयि भसंज्ञायामच इत्यल्लोपे चाविति प्रतेर्दीर्घः, ते तुभ्यम् ॥ ९५ ॥

जीवाय जीवरूपाय जीवकर्मैकसाक्षिणे ॥
जीवाजीवप्रभिन्नाय प्रतीचे ते नमो नमः ॥ ९६ ॥

जीवाय, प्राणधारणात् जीवान् रूपयति स्वप्रतिबिम्बनेन प्रकटयतीति जीवरूपः, जीवाः सप्राणाप्राणास्तत्प्रभेदेन भिन्नाय, देहेन्द्रियप्राणमनोबुद्ध्यादिभ्यः प्रातिलोम्येनाञ्चति प्रथत इति प्रत्यक् तस्मै प्रतीचे । अर्थभेदाद्पौनरुक्त्यम् ॥ ९६ ॥

कालाय कालकण्ठाय कालकण्ठाय तेजसे ॥
ओजसे भ्राजसे तस्मै यस्मै कस्मै नमो नमः ॥ ९७ ॥

कलयति जगत्परिणामयतीति कालः, कालं कण्ठयति दिनरात्रिपक्षमासर्त्वयनसम्वत्सरात्मना अतिवाहयतीति कालकण्ठः, कालवर्णः कण्ठो यस्य स कालकण्ठः 'नीलग्रीवो विलोहित' इति श्रुतेः । नामभेदः प्राग्वत् । तेजः स्वाभाविकी कान्तिः, देहपुष्ट्यध्ययनतपःप्रभृतिसाध्या देहकान्तिरोजः, स्रक्चन्दनवस्त्रालङ्कारादिप्रयुक्ता शोभा भ्राजः, तस्मै परोक्षाय, यस्मै प्रसिद्धाय, कस्मै जिज्ञासिताय । नमस्काराभ्यासो भक्त्यतिशयात् ॥ ९७ ॥

किरीटिने सुगदिने शङ्खिने चक्रिणे नमः ॥
शूलिने चन्द्रमूर्द्धे च वृषाय वृषवाहिने ॥ ९८ ॥

किरीटिने इत्यादि चत्वारि विष्णुनामानि । शूलिने इत्यादीनि शिवनामानि । वृषो धर्मो वृषभश्च, वृषं वाहयति तच्छीलो वृषवाही तस्मै॥९८॥

हंसिने वेदिने तस्मै चतुर्वक्त्राय ब्रह्मणे ।।
नमो ऋचाय ब्राह्माय ब्रह्मणे परमेष्ठिने ।। ९९ ।।

ॐ हंसिने इत्यादीनि हिरण्यगर्भनामानि । हंसोऽस्यास्तीति हंसी, वेदा अस्य सन्तीति वेदी, नमस्कारप्रतिपादका ऋचो यस्य स नमोऋचस्तस्मै, ऋक्पूरब्धूः पथामिति समासान्तोऽप्रत्ययः, अयत्वो वा, (?) सन्धयश्छान्दसाः, ब्राह्मो ब्रह्मप्रतिपादको वेदभागः ॥ ९९ ॥

लक्ष्मीपते ! धीपते ! त्वं पाहि नः पुरुषोत्तम ! ।।
दिव्याय दिव्यपुरुष ! पावनायातिपावन ! ।। १०० ।।

विष्णुत्वाल्लक्ष्मीपते ! शिवत्वाद्धीपते ! पुरुषश्चासौ उत्तमश्च पुरुषोत्तमः, पुरि शयनात्पूर्णत्वाद्वा पुरुषः, स एव क्षराक्षरपुरुषव्यतिरिक्तत्वादुत्तमः, दिवि द्युलोके भवः सूर्यो दिव्यस्तस्मै, तदन्तर्गतपुरुषो दिव्यपुरुषः, हे दिव्यपुरुष, पवनो वायुस्तदाधारः पावनः, अतिशयेन पावयसि पवित्रीकरोषीत्यतिपावनः ॥ ८९ ॥

रामाय रामदेहाय पावनाय पवित्रिणे ।।
यस्यकस्यस्वरूपाय जगद्रूपाय ते नमः ।। १ ।।

रामः रमणीयो देहो यस्य स रामदेहस्तस्मै, पावनः पवित्रीकरणः, पवित्राण्यस्य सन्तीति पवित्री, यस्यकस्यापि येन केनचिद्रूपेण प्रसिद्धस्य ज्ञाताज्ञातसर्ववस्तुनः पारमार्थिकस्वरूपाय, गच्छति षड्भावविकारान्प्राप्नोतीति जगत् तस्य स्वरूपभूताय ॥ १ ॥

महादेवाय देवाय नमउक्तिं विधेम ते ।।
सर्वेश्वराय सर्वाय अचिन्त्यविभवाय च ।। २ ।।

महत्त्वात्मज्ञानयोगैश्वर्ये महीयते इति महादेवः, देवाय स्वप्रकाशाय, ते तुभ्यं, नमउक्तिं वाङ्मयनमस्कारं विधेम कुर्मः । चिन्तयितुमशक्यो अचिन्त्यो विभवो विविधभवनं यस्य ॥ २ ॥

अविचिन्त्यमहिम्ने ते जगद्धात्रे नमो नमः ।।
सहस्रकृत्वो भूयश्च वन्दनं परमात्मने ।। ३ ।।

महिमा स्वरूपविस्तारः, ऐश्वर्यं च सोऽविचिन्त्यो यस्य सोऽविचिन्त्यमहिमा, जगतो धाता उत्पादको नियामकश्च, तस्मै सहस्रकृत्वो वन्दनङ्करिष्यामीति परेणान्वयः । भूयश्चेत्यनन्तनामत्वात्सर्वनामभिः

न्दनाशक्तया भूयो भूयस्तत्प्रत्याम्नायेन सर्वदिक्षु वन्दनं करिष्यामि ॥३॥

मङ्गलं जगतां नाथ ! नमनं विश्वपालक ! ॥
आराधनं करिष्यामि तव नान्यस्य कस्यचित् ॥ ४ ॥

मङ्गलं नाम मानसैर्वाद्यैर्महोत्सवादि करिष्यामि, नमनं शिरसः प्रह्वीकरणम्, आराधनं मानसं वाह्यं च सर्वोपचारः सम्यक्पूजनं तव करिष्यामि सदैवेत्यर्थः। अन्यस्य तद्व्यतिरिक्तस्य परिच्छिन्नस्य न करिष्यामि सर्वदेवांस्त्वदात्मनैव पूजयामीत्यभिप्रायः ॥ ४ ॥

सहस्रनामानि समाप्य सूतस्तत्फलमाह—

सूत उवाच—

प्राप्तये सर्वविद्यानां लब्धये सर्वसम्पदाम् ॥
इतीदं प्रणवस्याऽस्य नाम्नां साहस्रमीरितम् ॥ ५ ॥

*प्राप्तय इति* । क्रमसुक्तिफलानां साक्षान्मुक्तिफलानां च सगुणनिर्गुणगोचरसर्वविद्यानां वेदपुराणाद्यष्टादशविद्यानां च यथाकामं प्राप्तये, तथा ऐहिकामुष्मिकभोगतत्साधनलक्षणानां सर्वसम्पदां लब्धये, इति वर्णितप्रकारमिदं भवता पृष्टं नाम्नां सहस्रमेव साहस्रमीरितं कथितं मयेत्यर्थः ॥ ५ ॥

कृतये सर्वयज्ञानां सन्ततेः पर्यवाप्तये ॥
लब्धये सर्वकामानां निग्रहानुग्रहौ कृते ॥ ६ ॥

एवं प्रष्टुकामानां निर्विघ्नतया सर्वयज्ञानां कृतये अनुष्ठानसिद्ध्येऽपि क्रत्वनुष्ठानतत्फलप्राप्तये वा, सन्ततेर्वंशस्याऽविच्छिन्नस्य परिताऽवाप्तये, लौकिकानां पशुपुत्रादिक्षुद्रसर्वकामानां लब्धये, निग्रहानुग्रहौ शत्रुमित्रोदासीनेषु कृते कर्तुं यदीच्छति तदर्थं चेत्यर्थः। बाहुलकात्तुमर्थे किप् ॥६॥

इतीदं प्रणवस्याऽस्य नाम्नां साहस्रमीरितम् ॥
लब्धये सर्वतपसां वेदानां पर्यवाप्तये ॥ ७ ॥

इती श्रीस्कन्दपुराणे प्रणवकल्पे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

ॐ नमो ब्रह्मरूपाय शान्ताय समत्वेन सदोदिताय पूर्णाय चिद्विलासाय ॐकाराय नमः ॥

एवं सर्वतपसां देहमनःशुद्ध्यर्थानां च फलतो लब्धये वेदानामृगादीनां परितः साङ्गतयाऽक्षरशः प्रयोजनवदर्थावबोधतश्चावाप्तये इति प्रागुक्तफलस्यैव वयुत्याऽनुवादः ॥ तस्मात्सर्वपुरुषार्थदः शिवोक्तपरमरहस्यभूतोऽयं सपरिकरः प्रणवकल्पो भोगमोक्षार्थिभिः सदैव शब्दतोऽर्थतश्च परिशीलनीय इति सिद्धम् ॥ ७ ॥

वासुदेवेन्द्रयतिनां प्रीत्यर्थं शिवतुष्टये ॥
मया प्रणवकल्पोऽयं यथामति विकासितः ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसर्वज्ञसरस्वतीपूज्यपाद-
प्रशिष्येण श्रीरामचन्द्रसरस्वतीपूज्यपादशिष्येण श्रीगङ्गा-
धरेन्द्रसरस्वत्याख्यभिक्षुणा विरचितः प्रणव-
कल्पप्रकाशः सम्पूर्णः ॥

---

श्रीशिवयोः पादाब्जयोरर्पितः ॥
अज्ञानाद्वा प्रमादाद्वा स्खलितं यन्मया कृतम् ।
प्रार्थिताः प्रणता धीराः क्षन्तुमर्हन्ति साधवः ॥ १ ॥

---

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|---|---|---|---|
| सामथ्य | सामर्थ्यं | २ | ३ | पटंने | पठने | ३० | १३ |
| घातन | द्योतन | ,, | २७ | ओंकारा | ओंकारो | ,, | २० |
| पयवसित | पर्यवसित | ३ | १ | वंणो | वंणो | ,, | २७ |
| स्तेपु | स्तेषु | ४ | ५ | तत्तुदे | तत्तद | ३२ | १९ |
| शुभेक्षणे | शुभेक्षणे | ५ | २ | शन्त | शन्तं ३८/७१८ | ,, | २८ |
| रणो | र्णो | ,, | ४ | र्याणो | र्याणां | ३६ | १४ |
| स्यदो | स्यद्दो | ,, | ९ | दथ | दर्थ | ,, | ८ |
| न्मत्स्वरूपा | न्मत्स्वरूपा | ६ | ४ | न्यन्तर | न्यतर | ३९ | २२ |
| चात्तरा | चोत्तरा | ७ | ६ | लोकय | लोटय | ४१ | २२ |
| तदन्तरम् | तदनन्तरम् | ,, | १५ | ज्जुभ्रान्त्या | ज्जुभ्रान्त्या | ४२ | २२ |
| प्रवणस्य | प्रणवस्य | ,, | २० | मित: | भित: | ४३ | २४ |
| क्षण | क्षणा | ८ | ७ | कर्पर | कर्पूर | ४४ | ३१ |
| तां | तां | ९ | ४ | साध्यात्वा | साध्यं त्वा | ४५ | ११ |
| लेध्याये | लेध्यांये | १० | २० | पिशितानाद | पिशिताशनाश | ,, | २६ |
| माद | मोद | १२ | १४ | इदछा | इच्छा | ४६ | १८ |
| शाक | शोक | ,, | १५ | हत्य | हत्या | ४९ | १ |
| उद्विग्न: | उद्विग्न: | ,, | २८ | नथस्य | नर्थस्य | ५१ | १८ |
| नथ | नर्थं | १६ | २० | मदा | मद्या | ५३ | ८ |
| कारणा | कारणो | ,, | २५ | धापाधि | धोपाधि | ,, | १६ |
| दनंद | दानन्द | १८ | ७ | साग्ये | साये | ६१ | १७ |
| नवकि | नकि | १९ | ३ | ममठः | कमठः | ६८ | ४ |
| सन्तीर्गेति | सन्तृष्णोति | २० | २१ | कुटो | कुटी | ,, | ११ |
| मूलाच्छे | मूलोच्छे | २४ | ५ | त्तम | तम | ,, | १५ |
| तमागु | तमोगु | ,, | २२ | यर्वाद् | यंवाद् | ७० | १९ |
| पादा | पादो | ,, | २९ | लेप्य | लप्य | ,, | २३ |
| त्रित्य | त्रितय | २५ | १५ | क्षवा | क्षचा | ७१ | १७ |
| च्छति | च्छुति | २६ | ७ | ध्नृत्वा | र्दत्वा | ७२ | १८ |
| कार | कर | २७ | २७ | | | | |

७१ ब्रह्मसूत्रशाङ्करभाष्यम्। चतुःसूत्र्यन्त पूर्णानन्दीय व्याख्या सहितया श्रीगोविन्दा-नन्द प्रणीतया रत्नप्रभया समन्वितम्। सम्पूर्णम्। [ वेदान्तविभागे ९ ] रु० ६—०

७२ सिद्धान्तशिरोमणिः। श्रीभास्कराचार्य विरचितः। वासनाभाष्य सहितः ज्योति-षाचार्य म०म० श्री ६ मद्बापूदेवशास्त्रिकृतटिप्पणी सहितः। "गणिताध्यायः"। रु० २—० "गोलाध्यायः"। रु० २—० [ ज्यो० वि० ४ ] सम्पूर्ण रु० ४—०

७३ काकचण्डीश्वरकल्पतन्त्रम्। पण्डित रामकृष्ण शर्म्मणा सम्पादितम्। पण्डित वटुकनाथ शर्म्मा एम. ए. साहित्योपाध्याय इत्येतेन लिखितया प्रस्तावनया सनाथीकृतम्। [ आयुर्वेद शास्त्रविभागे १ ] रु० ०—८

७४ किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम् मल्लिनाथसूरिकृतया घण्टापथसमाख्यव्याख्यया तथा पं० श्रीगङ्गाधरशर्मणा कृतया सुधाऽऽख्यव्या-ख्यया समलङ्कृतम्। [ सर्गत्रयमात्रम् ]। [ काव्य वि० १० ] रु० ०—१२

७५ चन्द्रालोकः। पीयूषवर्षश्रीजयदेवकवि प्रणीतः। श्रीमत्पद्मनाभमिश्रापराभि-धान प्रद्योतनभट्टाचार्य विरचितया चन्द्रालोकप्रकाशापराख्य 'शरदागम' टीकया सङ्कलितः। साहित्याचार्येण खिस्ते इत्युपाख्यनारायणशास्त्रिणा भूमिकादिभिः सम्भूष्य सम्पादितः। [ अलङ्कार वि० ३ ] रु० ०—१०

७६ किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम्। मल्लिनाथसूरि-कृतया घण्टापथसमाख्यया तथा पं० श्रीकनकलालशर्मणा कृतया भावार्थदीपिनी-व्याख्यया समलङ्कृतम्। [ सर्गत्रयमात्रम् ] [ काव्य वि० ११ ] रु० ०—६

७७ शक्तिवादः, श्रीगदाधरभट्टाचार्यप्रणीतः, पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्तभट्टा-चार्यविरचितविवृतिसहितः। [ न्यायविभागे १० ] रु० ३—

७८ माथुरीपञ्चलक्षणी। पं श्रीउमानाथज्योतिर्विरकृतव्याख्या सहिता तथा माथुरीसिद्ध-व्याप्तिलक्षणम्। पं० श्रीहरिरामशुक्ल विरचितया व्याख्यया सहितं तथा पं० श्रीहरिहरशास्त्रि सङ्कलित माथुरीपञ्चलक्षणी क्रोडपत्रेण च। [ न्याय वि० ११] रु० ०—६

७९ रसाध्यायः। टीकया संवलितः। [ आयुर्वेदशास्त्र वि० २ ] रु० ०—१०

८० (१) पाणिनिव्याकरणे वादरत्नम्। न्यायव्याकरणाचार्य मीमांसक शिरोमणि पं० सूर्यनारायणशुक्लेन विरचितम्। ( तत्र च न्यास परिष्कारपरिशिष्ट भेदेन प्रकरण त्रयम् यत्र पञ्चन्यून सार्धशतसूत्रेषु १४५ महताटोपेन न्यासविचारतः तत्र प्रथमं प्रकरणं मुद्रितं प्रथमो भागः। [ व्या० वि १० ] रु० १—८

८० (२) पाणिनीव्याकरणे वादरत्नम्। द्वितीयोभागः [ व्या० वि० ] रु० १—४

८१ गणितकौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्धारितगणित-संग्रहपुस्तकम्। [ गणितविभागे १ ] रु० ०—६

८२ छन्दःकौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्धारितछन्द-संग्रहपुस्तकम्। [ छन्दोविभागे ३ ] रु० ०—३

८३ योगदर्शनम्। महर्षिप्रवरपतञ्जलिप्रणीतम्। तत्र ( १ ) भोजवृत्तिः, [२] भावा-गणेशवृत्तिः, [३] नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षड्कममेतम्। सटिप्पण। [ योग० विभागे १ ] रु० २—०

८४ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम्। म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः। १से ४सर्गाः रु० १—८ तथा ६ से १० सर्गाः। रु० १—८ मूलम् रु० १-४-० तथा १ से ५ सर्गाः रु० १—८ तथा ६ से १० सर्गाः।

८५ योगदर्शनम्। पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम्। सटिप्पण। [ योग वि० २ ] १—०

८६ काव्यमीमांसा। राजशेखरविरचिता। साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ५ अध्याय ] प्रथमो-भागः। [ काव्यविभागे १३ ] रु० १—८

८७ नागानन्दनाटकम् । श्रीहर्षदेवप्रणीतम् । काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य बृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम् । [ नाटक विभागे १ ] रु० १—८

८८ मेघदूतकाव्यम् । महाकवि श्रीकालीदास विरचितम् । मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायण शास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम् । [काव्य० १४] रु० ०—८

८९ जागदीशीव्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे १२ ) रु० २—०

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—३

९१ वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोर-शास्त्रिणा निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासन-प्रक्रियया उणादिकोषेण च सहिता । ( व्या० वि० ११ ) पूर्वार्द्धम् । रु० २—८
उत्तरार्द्धं । रु० २—८

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम् । साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम् ।(पुराणेतिहास वि०१) रु० ६—०

९३ आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः । श्रीजगदीशतर्कालङ्कारकृताः । न्यायाचार्य श्रीशिवदत्त-मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः । ( न्याय वि० १३) रु० १—४

९५ संस्कारदीपकः । गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग-निरूपणात्मकः प्रथमो भागः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीयविरचितः । ( कर्मकाण्ड वि० ८ ) रु० २—०

९६ वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापनसहितः । म० म० पं० नित्यानन्दपन्त-पर्वतीय विरचितः । ( कर्मकाण्ड वि० ९ ) रु० ३—८

९७ श्रौतसूत्रम् । श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम् । (कर्म० वि० १०) रु० २—०

९८ नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्ट विरचिता । विषमपद-प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । (का० वि०१६) रु० १—४

९९ श्रीब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा-ख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येन च सनाथीकृतम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०

१०० वाग्वल्लभः । सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छ-न्दोनिबन्धः, श्रीमता दैवज्ञाग्रेसरेणागममार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रसागरेण कविचक्रवर्तिना महामहोपाध्यायेन देवीप्रसाद पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः । ( छन्दः शास्त्र वि० ४) रु०

१०१ सिद्धान्तलक्षणम् । श्रीजगदीशतर्कालङ्कारकृतम् । न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम् । (न्याय विभागे १४) ) रु० १—८